तत्र सुदर्शनेन दिग्बन्धने पक्षविशेष उच्यते - ओं नमः सुदर्शनाय अस्त्राय फट् इत्यनेन मन्त्रेण वा दशदिग्बन्धनं कुर्यात् । एवमपि संप्रदायोऽस्ति ।।

तदुक्तं च क्रमदीपिकायाम् -

प्रणवहृदोरवसाने सचतुर्थिं सुदर्शनं चास्त्रकं च ।
उक्त्वा फडन्तममुना कलयेन्मनुनास्त्रमुद्रया दश हरितः।।

इति ।

सुदर्शनेन चेदेवं कुर्यात् । तत्प्रकारस्तु क्रमदीपिकोक्तप्रकारेण कथ्यते -

इडावक्त्रो धूम्रं सततगतिबीजं सलवकं
स्मरेत्पूर्वं मन्त्री सकलभुवनोच्छोषणकरम् ।
स्वकं देहं तेन प्रततवपुषाऽऽपूर्य सकलं
विशोष्य व्यामुञ्चेत् पवनमथ मार्गेण खमणेः ।।

तेनैव मार्गेण विलीनमारुतं
बीजं विचिन्त्यारुणमाशुशुक्षणेः ।
आपूर्य देहं परिदह्य वामतो
मुञ्चेत्समीरं सह भस्मना बहिः ।।

अपरमतीव शुभ्रममृतांशुपथेन विधुं
नयतु ललाटचन्द्रममुतः सकलार्णमयीम् ।

अपरजपाशिपात्य रचयेच्च तया सकलं

वपुरमृतौघवृष्टिमथ वक्त्राकराद्यमिदम् ।।

अस्यार्थः - प्रथमं, इडावक्त्रे - वामनासिकाग्रं इडानाडीवक्त्रं - तत्र, वायुबीजं सलवकं - लवकमिति बिन्दुः, तेन युक्तं - पुनस्तद्बीजं धूम्रवर्णं च - धूम्रमिति नीललोहितमिश्रवर्णं - तादृशं वायुबीजाख्यं यकारं सकलभुवनोच्छोषणकरं स्मरेत् । एवं स्मृत्वा, प्रततवपुषा - व्याप्तवपुषा - तेन वायुना स्वकं देहं वामनासिकाश्वासमार्गेणैवापूर्य, सकलं दैहिकं दुष्टं विशोषितं स्मृत्वा, पुनः खमणेरादित्यस्य मार्गेण - पिङ्गळानाडीमार्गेण - दक्षिणनासिकाश्वासमार्गेणेत्यर्थः । तेन मार्गेण तं पूर्वपूरितं वायुं व्यामुञ्चेत् रेचयेदित्यर्थः ।।

पुनरपि तेनैव मार्गेण खमणेर्मार्गेण - पिङ्गळामार्गेण, दक्षिणा-नासिकाशवासमार्गेण इत्यर्थः ।। तेन मार्गेण पूर्वविसृष्टं मारुतमेव पश्चाद्विलीनमारुत निवर्तयित्वा (निवर्त्य) तत्रैव प्रविष्टमारुतं कृत्वा, पुनराशुशुक्षणेरग्नेर्बीजं सबिन्दुकं रेफमित्यर्थः । तद्बीजं अरुणं अव्यक्त-रागस्वरूपं एतादृशं आशुशुक्षणेर्बीजं तु, विलीनमारुतमिति क्रिया-विशेषणम् । एवं दक्षिणनासिकाश्वासमार्गेण मारुतं विलीनं कृत्वा, अरुणवर्णमग्निबीजं तत्र ध्यात्वा, तं वायुमग्निबीजसहितमापूर्य, पूर्वं परिशोषितं देहं सर्वं परिदग्धं सम्भाव्य, वामनासिकाश्वासमार्गेण वायुं तेन दग्धभस्मना सह व्यामुञ्चेत् ।।

पुनः अपरमिति । अपरं विधुमिति समानाधिकरणे द्वितीये । अपरष्ठकारः । तं विधुं सोमात्मकं शुभ्रवर्णं च ध्यात्वा, अमृतांशुपथेन - इडानाडीमार्गेण, वामनासिकाश्वासमार्गेण - इत्यर्थः । तेन मार्गेण मूलाधारं नीत्वा, सुषुम्नाद्वारेण ललाटोपलक्षितद्वादशान्ते स्थितं इन्दुमण्डलं प्रापय्य, तयोरुभयोः सम्बन्धात् चन्द्रमण्डलचालनात् ततो निस्सृतामृतधारया तद्भस्म प्रक्षाल्य, तथैव जीवमापाद्य, पुनः

अकारादिवर्णरूपया तथा "मुखकरचरणादिकमुत्पादयामि" इत्यनुस्मरन्, वं इत्यमृतबीजं सप्रणवं च त्रिंशद्वारं कुम्भकेन सम्पाद्य, देहकाठिन्यार्थं लं बीजं मूर्ध्नि विन्यसेत् । पुनः, मातृकावर्णान् काननवृत्तेत्यादिना अस्मिन्नेव मातृकापटले उपरि वक्ष्यमाणेन क्रमेण न्यसेत् । एवं इडावक्त्रेत्यादिनोक्तो भूतशुद्धिप्रकारः' ।।

अनेन पूर्वोक्तक्रमदीपिकोक्तप्रकारेण वा भूतशुद्धिं कृत्वा, पुनः हकारत्रयमुच्चार्य सुषुम्नानाडीमार्गनिरोधकपर्वत्रयभञ्जनं कृत्वा, हंस इत्युच्चार्य, मूलाधारस्थजीवं सुषुम्नया द्वादशान्तं नयन्, पुनस्सोऽहमित्युच्चार्य द्वादशान्ते सहस्रदलकमलमध्यस्थ सहस्रादित्य-सङ्काशं परमात्मानं स्वात्मानं चैकीकृत्य, पुनः प्राणायामं कुर्यात् ।।

---

1. केवलमातृकान्यासेन वा भूतशुद्धिं कुर्यात् । इत्यधिकः पाठः प्र० ।। तदुक्तं च नित्योत्सवे (यौवनोल्लासः - श्रीक्रमः) - श्वाससमीरं पिङ्गलया नाड्या अन्तराकृष्य "ऐं ह्रीं श्रीं मूलशृङ्गाटकात् सुषुम्नापथेन जीवशिवं परमशिवपदे योजयामि स्वाहा" इति मन्त्रेण मूलाधारस्थितं जीवात्मानं सुषुम्नावर्त्मना ब्रह्मरन्ध्रं नीत्वा परमशिवेनैकीभूतं भावयित्वा इडया वायुं रेचयेत् । एवमेवोत्तरत्र शोषणादिष्वपि प्रातिस्विकं पूरकरेचने । "३ यं संकोचशरीरं शोषय शोषय स्वाहे"ति निजशरीरं शोषितं विभाव्य, "३ रं संकोचशरीरं दह दह पच स्वाहे"तिप्लुष्टं भस्मीकृतं च विभाव्य, "३ वं परमशिवामृतं वर्षय वर्षय स्वाहे"ति तद्भस्म सहस्रारेन्दुमण्डलविगळ-दमृतरसेन सिक्तं च विभाव्य, "३ लं शाम्भवशरीरं उत्पादयोत्पादय स्वाहे"ति तद्भस्मनो दिव्यशरीरमुत्पन्नं च विभाव्य, "३ हंसः सोऽहं अवतर अवतर शिवपदात् जीव सुषुम्नापथेन प्रविश प्रविश मूलशृङ्गाटकं उल्लस उल्लस ज्वल ज्वल प्रज्वल प्रज्वल हंसः सोऽहं स्वाहे"ति परमशिवेनैकीकृतं जीवं पुनः सुषुम्नावर्त्मना मूलाधारे स्थापितं विचिन्तयेत् । संकोचशरीरं नाम पाञ्चभौतिकं परिच्छिन्नमिदमेवाङ्गम् ।। **इति भूतशुद्धिः** ।। पुनः, 'अत्र स्थानत्रये षोडश - चतुःषष्टिद्वात्रिंशत् - सङ्ख्याक्रमेणेति केचित् - इति श्रीशारदातिलके ।।

तत्प्रकार उच्यते -

अकारं सबिन्दुकं द्वादशवारमावर्तयन् दक्षिणनासिकया विरेच्य, उकारं सबिन्दुकं षोडशवारमावर्तयन् वामनासिकया आपूर्य, मकारपूर्वकं तत्तन्मूलमन्त्रं द्वादशवारमावर्तयन् कुम्भकं कुर्यात् । एवं प्राणायामत्रयं कुर्यात् । (अथवा) यं यं मन्त्रं जप्तुमिच्छति तेन तेन मन्त्रेण प्राणायामं पञ्चचतुर्विंशदादितत्वसङ्ख्यया केवलं कुम्भकरूपेण वा अष्टषोडश-द्वात्रिंशदादिसङ्ख्यया वा षोडशद्वात्रिंशच्चतुष्षष्ट्यादिसङ्ख्यया वा रेचकपूरककुम्भकरूपेण कुर्यात् । एवं सर्वमन्त्रजपस्य पुरतश्च त्रिवारं कुर्यात् । एवं दिनशो यः षोडशसङ्ख्यं करोति स तु मासतः पापात् परिपूयते ।।

**कनिष्ठानामिकाङ्गुष्ठैः यन्नासापुटधारणम् ।**
**प्राणायामस्स विज्ञेयः तर्जनीमध्यमे विना ।।**

एवं प्राणायामं कृत्वा तत्तज्जप्यमन्त्रं प्रतिलोमेन उच्चार्य स्वात्मानं तेजोरूपं ध्यात्वा तत्तेजः करतले दक्षिणनासिकाश्वासमार्गेण निपात्य करन्यासं कुर्यात् ।

तदुक्तं च प्रपञ्चसारसारसङ्ग्रहे -

**अङ्गुलीषु क्रमादङ्गैरङ्गुष्ठादिषु विन्यसेत् ।**
**कनिष्ठान्तासु तद्बाह्यतलयोः करयोस्सुधीः ।।** इति ।।

अयमेव सर्वमनूनां जपारम्भे च न्यायः ।।

अथ **मातृकामन्त्रस्य** ब्रह्मा ऋषिः । गायत्री छन्दः । मातृकासरस्वती देवता ।।

तत्र ऋष्यादेः स्थानानि -

> ऋषिर्गुरुत्वात् शिरसैव धार्यः
> छन्दोऽक्षरत्वात् रसनागतं स्यात् ।
> धियाऽवगन्तव्यतया सदैव
> हृदि प्रदिष्टा मनुदेवता च ।। इति ।।

एतेषामर्थस्तु -

> ऋषिवर्णादिकौ धातू स्तो गत्यां प्रापणेऽपि च ।
> ताभ्यां यद्यत्स्वरूपं स ऋषिः स्याद्गुरुवाचकः ।।

> इच्छादानार्थकौ धातू स्तश्छदाद्यश्च दादिकः ।
> तयोरिच्छां ददातीति छन्दो मन्त्रार्णवाचकः ।।

> आत्मनो देवताभावप्रदानाद्देवतेति च ।
> पद समस्तमन्त्रेषु विद्वद्भिस्समुदीरितम् ।। इति ।।

एवं ऋष्यादीन् कृत्वा, पुनः षडङ्गान्यवश्यकर्तव्यानि कुर्यात् । मेधादक्षिणामूर्तिकल्पे तु भक्तश्चेदवश्यकर्तव्यताराहित्यमुक्तम् -

> अङ्गन्यासं विना वापि शिवभक्तस्य सिद्ध्यति ।
> अङ्गमन्त्रैर्विना वापि सिद्धसाध्यादिभिर्विना ।
> जपेन मन्त्रः सर्वेषां सर्वसिद्धिप्रदो भवेत् ।। इति ।।

अथ षडङ्गन्यासस्थानानि च तत्सामान्यप्रकाराश्चोच्यन्ते -

> हृदयशिरसोश्शिखायां कवचाक्ष्यस्त्रेषु सचतुर्थीषु ।
> नत्या हुत्या वषड्ढुं वौषट्फट्पदैः षडङ्गविधिः ।।

पञ्चैव यस्य मन्त्रस्य भवन्त्यङ्गानि मन्त्रिणः ।
सर्वेष्वपि च मन्त्रेषु नेत्रलोपो विधीयते ।। इति ।।

अथ मातृकामन्त्रस्य षडङ्गविधिः -

**अं क ख ग घ ङ आं हृदयम् । (हृदयाय नमः)**
**इं च छ ज झ ञ ईं शिरः । (शिरसे स्वाहा)**
**उं ट ठ ड ढ ण ऊं शिखा । (शिखायै वषट्)**
**एं त थ द ध न ऐं कवचम् । (कवचाय हुं)**
**ओं प फ ब भ म औं नेत्रम् । (नेत्रत्रयाय वौषट्)**
**अं य र ल व श ष स ह ळ क्ष अः अस्त्रम् । (अस्त्राय फट्)**

मातृकावर्णैरङ्गविधौ सर्वत्रैवमेव स्वराक्षराणां बिन्दुयुक्तं च हलां तद्रहितं च, स्वराणां मध्ये ऋकारादि वर्णचतुष्टयरहितं च स्वराक्षरद्वन्द्व-पुटित कादिवर्गं च कर्तव्यम् । तदुक्तं च -

**आद्यन्तस्वरषट्कलघ्वपरोरन्तस्थितैः कादिभिः ।**
**वर्गैर्यान्तगतैः क्रमेण कथिता न्यासाः षडङ्गानि च ।। इति ।**

तत्राङ्गन्यासमुद्राप्रकारः क्रमदीपिकोक्तप्रकारेणोच्यते -

**अनङ्गुष्ठा ऋजवो हस्तशाखाः**
**भवेन्मुद्रा हृदये शीर्षके च ।**
**अधोऽङ्गुष्ठा खलु मुष्टिः शिखायां**
**करद्वन्द्वाङ्गुल्यो वर्मणि स्युः ।।**

**नाराचमुष्ट्युद्धत बाहुयुग्म-**
**काङ्गुष्ठ-तर्जन्युदितो ध्वनिस्तु ।**
**विष्वग्विषक्तः कथितोऽस्त्रमुद्रा**
**यत्राक्षिणी तर्जनीमध्यमेऽत्र ।।**

यत्राक्षिणीत्यनेन यत्रशब्देन पञ्चाङ्गपक्षे नेत्रलोपः प्रागुक्तः सूचितः ।। तत्र नाराचमुष्टिलक्षणमुच्यते - हस्ततलद्वयमन्योन्यं सम्मुखीकृत्य तयोर्मध्यमाऽनामिका-कनिष्ठाङ्गुलीर्मुष्टिकृत्य तर्जनीद्वयं ऋजूकृत्य अन्योन्याग्रेण संस्पृश्य अङ्गुष्ठद्वयं च तथैव ऋजूकृत्य, अन्योन्यं संश्लिष्य, ताभ्यां अङ्गुष्ठतर्जनीद्वन्द्वाभ्यामुदितो ध्वनिः स्वपरितो विषक्तः अस्त्रमुद्रेत्यर्थः ।।

तत्र अस्त्रमुद्रानन्तरं नेत्रमुद्रोक्त्या वैष्णवदेवताविषये सर्वत्रास्त्रन्यासानन्तरं नेत्रन्यास इति केषांचित् पक्षः सूचितः । मन्त्रदेवताप्रकाशिकायामपि अङ्गविधिरुक्तः त्रिद्व्येकदशकत्रिद्विसंख्याकांगुळिभिः क्रमात् , इति ।।

अस्यार्थः - अङ्गुष्ठ-तर्जनी-मध्यमायुक्तेनाङ्गुलित्रयेण हृदयम् । अङ्गुष्ठतर्जनीभ्यां शिरः । अङ्गुष्ठेन शिखा । उभयकरदशाङ्गुलीभिः कवचम् । तर्जनीमध्यमानामिकात्रितयेन नेत्रम् । उभयकराङ्गुष्ठतर्जनीभ्यां अस्त्रमिति ।।

अङ्गानामर्थस्तु -

हृदयं बुद्धिगम्यत्वात् प्रणामः स्यान्नमः पदम् ।
क्रियते हृदयेनातो बुद्धिगम्या नमस्कृतिः ।।

तुङ्गार्थः शिरसे चेति विषयाहरणे द्विठः ।
शिरोमन्त्रेण चेत्तुङ्गविषयाहृतिलक्षणा ।।

शिखा तेजः समुद्दिष्टा वषडित्यङ्गमुच्यते ।
तत्तेजोऽस्य तनुः प्रोक्ता शिखामन्त्रेण मन्त्रिभिः ।।

कव ग्रहणे इत्यस्माद्धातोः कवचसम्भवः ।
हुं तेजस्तेजसा देहो गृह्यते कवचं ततः

असुत्रसादिकौ धातू सङ्क्षेपचलनार्थकौ ।
तेनानिष्टं समाक्षिप्य चालयेत् फट्पदाग्निना ।।

नेत्रं दृष्टिस्समुद्दिष्टा वौषट् दर्शनमुच्यते ।
दर्शनं दृग्विषयेण स्यात् तत्तोजो नेत्रवाचकम् ।। इति ।।

एवमङ्गन्यासं कृत्वा पुनर्बीजशक्त्यादीन् स्मरेत् । यत्र यत्र बीजशक्ती पृथगनुक्ते, तत्र सर्वत्र प्रणवो बीजं, भुवनेश्वरी शक्तिः इत्याचार्याभिप्राय इति वर्णयन्ति । तदुक्तं च प्रपञ्चसारटीकाकारेण - 'अनुक्तबीजशक्तिविशेषाणां मन्त्राणां प्रणवो बीजम् । भूतिश्शक्तिरिति' । एवं सत्यशबलितयोर्ब्रह्ममाययोः सर्वप्रपञ्चकारणत्वं प्रणवहृल्लेखयोः समस्त (मन्त्र) बीजशक्तिकारणत्वं चोक्तं भवति । तस्मात् समस्त मन्त्रानुस्यूतशब्दब्रह्माख्यमातृकामन्त्रावगाहिप्रणवहृल्लेखावाच्यमायाशबलत ब्रह्मस्वरूपप्रत्यगात्मभूताखण्डसुखचित्प्रकाशात् समस्ताङ्गसहितसकल-देवतामन्त्रमूर्तयः साधकस्य भाग्यवशात् प्रज्वलिताग्नेर्विस्फुलिङ्गा इव प्रादुर्भूता इति भावयेत् । अनन्तरं तथाविधाभीष्टदेवतामयं तेजः स्वशरीरे अन्तर्बहिश्च व्याप्नोतीति चिन्तयेत् ।।

पुनर्मातृकाध्यानम् -

**पञ्चाशद्वर्णभेदैर्विहितवदनदोःपादयुक्कुक्षिवक्षो-**
**देशां भास्वत्कपर्दाकलितशशिकलामिन्दुकुन्दावदाताम् ।**
**अक्षस्रक्कुम्भचिन्तालिखितवरकरां त्रीक्षणां पद्मसंस्था-**
**मच्छाकल्पामतुच्छस्तनजघनभरां भारतीं तां नमामि ।।**

तत्र, अक्षस्रगित्यक्षमाला । कुम्भः पूर्णकुम्भः । चिन्तेति ज्ञानमुद्रा । लिखितं पुस्तकम् । तत्र, दक्षिणाङ्गुष्ठ-तर्जन्योरन्योन्याग्र-संस्पर्शेन पराभिमुखप्रदर्शनं ज्ञानमुद्रेति कीर्त्यते । पुनरेवं ध्यात्वा (प्रपञ्चसारसारसङ्ग्रहे त्रिंशत्पटले त्र्यम्बकविधाने वक्ष्यमाणप्रकारेण) प्राणप्रतिष्ठां कृत्वा मानसपूजां पञ्चोपचारैः कुर्यात् ।।

तत्प्रकार उच्यते -

प्रथमं उभयकाराङ्गुष्ठाग्रेण उभयकरकनिष्ठिकयोः मध्यमपर्वणोः स्पर्शनपूर्वकं, 'ओं गन्धं कल्पयामि' इत्युक्त्वा गन्धोपचारं समर्पयेत् । पुनस्तथैव तर्जन्यग्रद्वयेन अङ्गुष्ठद्वयमध्यादेशसंस्पर्शनपूर्वकं, 'ओं पुष्पं कल्पयामि' इति पुष्पमुद्रया पुष्पोपचारं समर्पयेत् । पुनरितरासु तिसृष्वपि अङ्गुलीषु तर्जन्यादिषु अङ्गुष्ठाग्रेण मध्यमपर्वदेशसंस्पर्शनपूर्वकमेव धूपदीपनैवेद्यमुद्राः क्रमेण तत्तन्नाम्ना पूर्ववदेव समर्पयेत् । एवं सर्वत्र मानसपूजाप्रकारः ।। तत्क्रमदीपिकायां सूचितं च -

**"ततो निवेद्य मुद्रिकां प्रधानया करद्वये**
**स्पृशन्ननामिकां निजं मनुं जपन् प्रदर्शयेत्"** ।। इति ।।

प्रधानयेति अङ्गुष्ठेन । तत्र तु केवलं नैवेद्यमुद्रामात्रं प्रदर्शितम् । अयमेव न्याय इतरमुद्रिकाणामपि द्रष्टव्यः । अथवा, कल्पान्तरोक्तप्रकारेण गन्धाद्युपचारमन्त्राः -

**लं पृथिव्यात्मने नारायणाय सत्यं गन्धं कल्पयामि ।**
**हं आकाशात्मने वासुदेवाय ब्रह्मपुष्पं कल्पयामि ।**
**यं वाय्वात्मने सङ्कर्षणाय धूपं कल्पयामि ।**
**रं अग्न्यात्मने प्रद्युम्नाय दीपं कल्पयामि ।**
**वं अमृतात्मने अनिरुद्धाय अन्नं नैवेद्यं कल्पयामि ।**

एभिरेव वा मन्त्रैः पूर्वोक्तमुद्राप्रकारेण मानसपूजां कुर्यात् । एवं स्वहृदये देवतां ध्यात्वा, तत्र मानसपूजां कृत्वा, मातृकाकरस्वतीमन्त्रं पूर्वसेवापुरस्सरं लक्षसङ्ख्यं जपेत्, न्यसेच्च तावत्सङ्ख्यं पुरश्चरणार्थम् ।।

अकाराद्याः क्षकारान्ता वर्णाः मातृकासरस्वतीमन्त्रः । तत्र पूर्वसेवेति सर्वेषां मन्त्राणां पुरश्चर्यायाः प्रागेव तदधिकारसिद्ध्यर्थमे-

तावत्सङ्ख्यं जप्तव्यमित्यस्ति नियमः । तावत्तद्विधानोक्तसङ्ख्यया पूर्वं जप्त्वा, पश्चाद्यथाविधि पुरश्चर्यां कुर्यादित्यर्थः ।

उक्तं च -

**द्वात्रिंशत्साहस्रैरधिकृतिरयुतैर्भवेत्पुरश्चरणम् ।**
**तावद्भिस्तावद्भिर्लक्षैस्सिध्यै समीरितास्य मनोः ।। इति ।।**

क्रमदीपिकायामप्येवमेवोक्तम्, अष्टादशाक्षरविधाने दशाक्षरीविधाने च -

**तेनानुज्ञातः पूर्वसेवां द्वितीये मासि द्वादश्यामारभेतामलायाम् ।।**
**प्रजपेदयुतचतुष्कं दशाक्षरं मनुवरं पृथक् क्रमशः ।**
**अष्टादशाक्षरं चेदयुतद्वितयमित्युदीरिता सङ्ख्या ।। इति ।।**

पुनरपि तत्रैवोक्तम् -

**एकं वैषामशक्तौ गदितमिह मया पूर्वसेवाविधानं**
**निर्वृत्तेऽस्मिन्पुनश्च प्रजपतु विधिवत् सिद्धये साधकेन्द्रः ।। इति ।।**

तत्र, द्वितीये मासीति । प्रथमे मासि दीक्षां कृत्वा, पश्चात् द्वितीये मासि जप्यादित्यर्थः ।।

तत्र, एकं वैषामशक्तौ इत्येषां पदानामस्मिन्नर्धेऽन्वयो नास्ति । पूर्वत्रैवान्वयः । तत्र तु, पूर्वसेवासङ्ख्या यत्र नोक्ता तत्र सर्वत्र सहस्रसङ्ख्या कर्तव्येति संप्रदायः । तदुक्तं च मेधादक्षिणामूर्तिकल्पे -

**सङ्ख्यानुक्ते सहस्रं स्यात् द्रव्यानुक्ते घृतं तथा ।**
**समिधोऽनुक्तविषये पलाशः परिकीर्तितः ।। इति ।।**

तत्र शिवभक्तश्चेत् पूर्वसेवापेक्षानियमो नास्ति । तदुक्तं चिदम्बरकल्पे -

**पूर्वसेवां विना वापि शिवभक्तस्य सिद्ध्यति ।। इति ।।**

अथास्य मातृकाक्षरन्यासस्य स्थनान्युच्यन्ते -

काननवृत्तद्व्याक्षिश्रुतिनोगण्डोष्ठदन्तमूर्धास्ये ।
दोःपत्सन्ध्यग्रेषु च पार्श्वद्वयपृष्ठनाभिजठरेषु ।।

हृद्दोर्मूलापरगलकक्षेषु हृदादि पाणिपादयुगे ।
जठराननयोर्व्यापकसंज्ञान्न्यसेदथाक्षरान् क्रमशः ।।

तत्र, पादयोः व्यापकाक्षराणि । तानि तु हृदयादारभ्यैव तदुक्तस्थानपर्यन्तं व्यापकरूपेणैव न्यसेत् ।

( तदुक्तं च क्रमदीपिकायाम् )

हृदयपूर्वमनेन पथान्वहं न्यसतु शुद्धकळेबरसिद्धये । इति ।।

तत्र, दोर्मूलापरगळकक्षेषु इत्यत्र क्रमदीपिकामते, कक्षे ककुदि दोर्मुले इति दक्षिणकक्षे वामे दोर्मूल इत्युक्तः पक्षविशेषः ।। एवं सृष्टिन्यासः ।।

अथ पुरश्चणजपास्थानान्युच्यन्ते -

समुद्रतीरेप्यथवाऽद्रिशृङ्गे
समुद्रगानां सरितां च पारे ।
जपेद्विविक्ते निज एव गेहे
विष्णोर्गृहे वा पुरुषो मनस्वी ।। इति ।।

शिवगीतायामुक्तम् -

बिल्ववृक्षं समाश्रित्य यो मन्त्रान् विविधान् जपेत् ।
एकेन दिवसेनैव तत्पुरश्चरणं भवेत् ।।

यस्तु बिल्ववने नित्यं कुटिं कृत्वा जपेन्नरः ।
सर्वे मन्त्राः प्रसिद्ध्यन्ति जपमात्रेण केवलम् ।।

पर्वताग्रे नदीतीरे बिल्वमूले शिवालये ।
अग्निहोत्रे केशवस्य सन्निधौ च जपेत्तु यः ।।

नैवास्य विघ्नं कुर्वन्ति दानवा यक्षराक्षसाः ।
तं न स्पृशन्ति पापानि शिवसायुज्यमृच्छति ।।

मन्त्रदेवताप्रकाशिकायामपि पुरश्चरणविधिरुक्तः -

ग्रहणेऽर्कस्य चेन्दोर्वा सुचिः पूर्वमुपोषितः ।
नद्यां समुद्रगामिन्यां नाभिमात्राम्भसि स्थितः ।।

ग्रहणादि तु मोक्षान्तं जपेन्मन्त्रं समाहितः ।
अनन्तरं दशांशं च क्रमात् होमं समाचरेत् ।।

तदन्ते मन्त्रसिद्ध्यर्थं गुरुं संपूज्य तोषयेत् ।
ततश्च मन्त्रसिद्धिस्स्याद्देवता च प्रसीदति ।।

अथवा देवतारूपं गुरुं भक्त्या प्रतोषयेत् ।
पुरश्चरणहीनोऽपि मन्त्रसिद्धिर्न संशयः ।।

एवं साधितमन्त्रस्तु काम्यकर्माण्यथाचरेत् ।
तत्र तत्रोक्तमार्गेण काम्यसिद्धिस्ततो भवेत् ।।

कालनियमस्तु रामकल्पे उक्तः -

सर्वेषां श्रुतिमूलानां नित्यनैमित्तिकात्मनाम् ।
कर्मणामविरोधेषु कालेषु जप उच्यते ।। इति ।।

शीवगीतायामप्युक्तम् -

ब्राह्मं मुहूर्तमारभ्य आमध्याह्नं जपेन्मनुम् ।
अत ऊर्ध्वं कृते जापे विनाशो भवति ध्रुवम् ।।

पुरश्चर्यविधावेनं सर्वकामफलेष्वपि ।
नित्यनैमित्तिके वापि तपश्चर्यासु वा पुनः ।।

सर्वदैव जपः कार्यो न दोषस्तत्र कश्चन ।। इति ।।

नियमस्ते क्रमदीपिकायामुक्तः -

कृत्वा स्नानाद्यं कर्म देहा(?)र्चनान्तं
सद्माश्रित्य प्रागीरितं मन्त्रिमुख्यः ।
शुक्लो मौनी सन्ब्रह्मचारी निराशीः
जप्यात् शान्तात्मा शुक्लपद्माक्षदाम्ना ।।

कुर्वन् शुश्रूषां गोषु ताभ्यः प्रयच्छन्
ग्रासं भूतेषु प्रोद्वहंश्चानुकम्पाम् ।
मन्त्राधिष्ठात्रीं देवतां वन्दमानः
दुर्गां दुर्बोधध्वान्तभानुं गुरुं च ।।

कुर्वन्नात्मीयं कर्म वर्णाश्रमस्थं
मन्त्रं जप्त्वाऽद्भिः स्नानकालेऽभिषिञ्चन् ।
आचामन्पाथस्तत्त्वसङ्ख्याभिजप्तं
भुञ्जानश्चान्नं सप्त जप्त्वाऽथऽसाज्यम् ।।

पुनरपि क्रमदीपिकायामेवोक्तं -

"शाकं मूलं फलं गोस्तनभवदधिनी भैक्षमन्नं च सक्तुं
गौडान्नं चेत्यदानक्षितिधरशिखरादौ क्रमात्स्थानभेदे ।।
एकं वैषामशक्तौ गदितमिह मया" ।। इति ।।

सङ्कल्पप्रकारस्तु सत्संप्रदायसर्वस्वाभिधाने विवरणे एवमुक्तः -

सर्वासां मन्त्रविद्यानां पुरश्चरणसमये[1] साध्यदेवतां तदुक्तेन विधानेन समभ्यर्च्य, तदग्रे तां देवतां 'प्रतिदिवसमेवं सङ्ख्यं जपहोमादिभिः त्वां भजामि' इति सङ्कल्प्य, पश्चात् प्रतिदिवसमन्यूनानतिरिक्तमनुष्ठानं विधाय, परिपूर्णे सङ्ल्पे प्राग्वदभ्यर्च्य पुरतः प्राञ्जलिः, 'प्राग्वत्प्रतिदिवसमेवं सङ्ख्यं स्वामिन् नित्यं भजामि' इति विज्ञाप्य प्रतिदिवसं जपस्य शनैश्शनैरारोहणावरोहणे कुर्यात् । तत्र, आरम्भसमये एवं क्रियत इति उत्तरोत्तरसङ्ख्यानुरूपेणैव प्रार्थ्य तथा कुर्यात् । समापनसमये तु तद्विपरीतेन प्रार्थ्य क्रमेण ह्रासयेदित्यर्थः ।।

(तत्र, मन्त्रदेवताप्रकाशिकोक्तप्रकारेण स्थानादि नियमविशेषा उच्यन्ते -)

यदि ग्रामे जपेन्मन्त्री तत्र कूर्म विरच्य च ।
सिध्यर्थं तन्मुखे तिष्ठेत् तत्कूर्माकृति उच्यते ।।

कूर्मस्याङ्कानि चाष्टस्युर्मुखं हस्तौ च पार्श्वकौ ।
पादौ पुच्छमिति प्रोक्तं प्रशस्तं मुखमेव तु ।।

स्वरद्वन्द्वं क्रमाद्दिक्षु पूर्वादिष्वष्ठसु न्यसेत् ।
तथा कादीन्सप्तवर्गान् न्यसेत् शैवदिशं विना ।
ग्राम ब्राह्मणवर्णस्तु[2] यस्यां दिशि च तिष्ठति ।।

तत्र कूर्ममुखं ज्ञेयं अन्याङ्गानीतरत्र च ।
मुखे तु तत्फलं विन्द्यात् करयोरल्पकं फलम् ।।

---

1. तत्र, पुरश्चरणं नाम मन्त्रफलसिद्ध्यर्थं उपोद्घातत्वेन पूर्वसेवनम् ।।
- इति मन्त्रदेवताप्रकाशिकायाम् ।।

2. ग्राम नामाद्यवर्णस्तु इति प्रपञ्चसारसारसङ्ग्रहे ।

नैष्फल्यं पादयोर्मध्ये त्वौदासीन्यं तु पार्श्वयोः ।
वधबन्धनदुःखानि पुच्छदेशे भवन्ति हि ।।

इत्थं ज्ञात्वा कूर्मचक्रं तत्तत्कर्माणि साधयेत् ।
आसनस्थो जपेत्सम्यक् मन्त्रार्थगतमानसः ।
कौशेयं चर्म वैयाघ्रं चैलं नैल(ऐण)मथापि वा ।।

दारवं ताळपत्रं वा काम्बलं दार्भमासनम् ।
शय्योष्टकाश्मधरणी तृणपल्लवनिर्मितम् ।
वर्जयेदासनं मन्त्री दारिद्र्यव्याधिदुःखदम् ।।

जपस्य मात्रानियमस्त्वस्मिन्नेव शास्त्रे उपरि वैष्णवाष्टाक्षरीपटले वक्ष्यते - नातिद्रुतं नातिविलम्बितं चेति । कल्पान्तरेऽप्युक्तम् -

उच्चैर्जपोऽधमः प्रोक्तः उपांशुर्मध्यमः स्मृतः ।
उत्तमो मानसो देवि त्रिविधः कथ्यते जपः ।।

अतिह्रस्वो व्याधिपीडा अतिदीर्घस्तपःक्षयः ।
अक्षराक्षरसंयुक्तं जपेन्मौक्तिकहारवत् ।।

इत्येवं मातृकामन्त्रपुरश्चर्यां कृत्वा, तदन्ते मधुरत्रयसिक्तैस्तिलैरयुतं पुरश्चरणहोमं कुर्यात् ।।

अथवा प्रत्यहं जप्त्वा जुहुयात् तद्दशांशतः ।
नैरन्तर्यविधिः प्रोक्तः न दिनं प्रतिलङ्घयेत् ।।

दिवसातिक्रमात्पुंसो मन्त्रसिद्धिर्भवेन्न हि ।
यावत्सङ्ख्यं जपेदह्नि पूर्वस्मिंस्तावदेव तु ।।

दिनान्तरेऽपि प्रजपेदन्यथा सिद्धिरोधकृत् ।

तत्र, मधुरत्रयं नाम क्षौद्रं गुडाज्यमिश्रितं, क्षौद्रं क्षीराज्यमिश्रितं वा - इति, पक्षविशेषः । तत्र, विघ्नेशविषये चेत् प्रायेण इतरदेव । तत्र,

होमे अशक्तश्चेत् जपसङ्ख्यापेक्षया वेदसङ्ख्यागुणितो ब्राह्मणैर्मन्त्रो जप्तव्यः । षट्शङ्ख्यागुणितः क्षत्रियैः जप्तव्यः । अष्टसङ्ख्यागुणितो वैश्यैः जप्तव्यः । होमेन साकं चेदेषां त्रयाणामभि समानैव सङ्ख्या । पुनर्वर्णानां त्रयाणां मध्ये, होमराहित्ये, यस्य वर्णस्य या विहिता सङ्ख्या सा तत्स्त्रीणां तद्वर्णमाश्रितस्य शूद्रस्यापि सङ्ख्या विहिता इति संप्रदायः ।

तदुक्तं क्रमदीपिकायाम् -

**अशक्तानां होमे निगम-रस-नागेन्द्रगुणितो**
**जपः कार्यश्चेति द्विज-नृप-विशामाहुरपरे ।**
**सहोमश्चेदेषां सम् इह दपो होमरहिते**
**य उक्तो वर्णानां स खलु विहितस्तच्चलदृशाम् ।।**

**यं वर्णमाश्रितो यः शूद्रस्य च तन्नतभ्रुवां विहितः ।**
**विदधीत विधिवदेनं श्रद्धावान्भक्तिभावनम्रतनुः ।।** इति

तत्राहुरपर इति । द्विगुणादिक्रमेणेति शेषः ।।

तदुक्तम् -

**यद्यदङ्गं विहीयेत तत्सङ्ख्याद्विगिणो जपः ।**
**कर्तव्यः समवाङ्गसिद्ध्यर्थं तदशक्तेन भक्तितः ।।**

**विप्राराधनमात्रेण व्यङ्गं साङ्गत्वमाप्नुयात् ।।** इति ।।

तत्र, भक्तश्चेत् शूद्रस्यापि मन्त्रेऽधिकारोऽस्तीति वर्णयन्ति । तदुक्तं च क्रमदीपिकायाम् -

**क्षितिसुर-नृप-वैश्य-शूद्रजानां**
**मुनि-वनवासि-गृहस्थ-वर्णिनां च ।**

जप-हुत-यजनादिभिर्मनूनां
फलति हि कश्चन कस्यचित्कथञ्चित् ।।

सर्वेषु वर्णेषु तथाऽऽश्रमेषु नारीषु नानाविधजन्मगेषु ।
दाता फलानामभिवाञ्छितानां द्रागेव गोपालकमन्त्र एषः ।।

नूनमच्युतकटाक्षपातने कारणं भवति भक्तिरञ्जसा ।
तच्चतुष्टयफलाप्तये ततो भक्तिमानाधिकृतो हरौ गुरो ।। इति

## अथ होमार्थं कुण्डलक्षणविधिः

अन्यत्रोक्तप्रकारेण उच्यते -

प्रागेव लक्षणयुतानि च मण्डपेऽस्मिन्
कुण्डानि कारयतु सम्यगथो दिशासु ।
आखाण्डला-र्कसुत-वारि-धनाधिपानां
दोर्मात्रकानिविलसद्गुणमेखलानि ।।

चतुरश्रमर्धशशिबिम्बविलसितमथ त्रिकोणकम् ।
पद्मदलरुचिरवृत्तमिति ब्रुवते वुधा विधिषु कुण्डलक्षणम् ।।

विंशद्भिश्चतुरधिकाभिरङ्गुलीभिः
सूत्रेणाप्यथ परिसूत्र्य भूमिभागम् ।
ताभिश्च प्रखनतु तावतीभिरेकां
त्यक्त्वा चाङ्गुलमपि मेखलाश्च कार्याः ।।

सत्वपूर्विकगुणान्विताः क्रमात्
द्वादशाष्टचतुरङ्गुलोच्छ्रिताः ।
सर्वतोऽङ्गुलिचतुष्कविस्तृताः
मेखलास्सकलसिद्धिदा मताः ।।

## ।। अथ होमसामान्यविधिः ।।

विघ्नेशकल्पोक्तप्रकारेण उच्यते -

विविक्ते रुचिरे रम्ये सुखासीनः समाहितः ।
आत्मानमात्मना ध्यात्वा जपहोमादिकाः क्रियाः ।।

स्वगृह्योक्तविधानेन अग्निं प्रज्वाल्य देशिकः ।
कुण्डे वा स्थण्डिले वापि ब्राह्मणैरथवा स्वयम् ।।

औपसाने यदि स्वार्थमितिरेषां तु लौकिके ।। इति ।।

त्र्यम्बककल्पे -

तत्र कृत्वाऽऽज्यभागान्तं सर्वमुल्लेखनादिकम् ।
स्वगृह्योक्तविधानेन ततो होमं समाचरेत् ।। इति ।।

स्वगृह्योक्तेति । आचार्यस्य कर्तुर्वेति विकल्पः ।।

धन्वन्तरिविधाने उक्तं -

अग्निमुखादिकमखिलं स्वचरणविहितक्रमेण कृत्वाऽग्नौ ।
आवाह्य वैद्यनाथं परिवारयुतं प्रपूज्य गन्धाद्यैः ।। इति ।।

अथ च -

तत्राथो सदृतुमतीमतीन्द्रियाभां
संस्मृत्वा सकलजगन्मयीं च शक्तिम् ।
तद्योनौ मणिभवमारणेयकं वा
तारेण क्षिपेत् गृह्योत्थमेव चाग्निम् ।।

"चित्पिङ्गल हन हन दह दह पच पच सर्वज्ञाज्ञापय स्वाहा" । अनेनानलं ज्वालयेत् ।।

"अग्निं प्रज्वलितं वन्दे जातवेदं हुताशनम् ।
सुवर्णवर्णमन(म)लं समिद्धं सर्वतोमुखम्" ।। इति प्रार्थ्य

अनेन ज्वलितं मन्त्रेणोपतिष्ठेद्धुताशनम् ।
ततः प्रविन्यसेद्देहे जिह्वां मन्त्रैः विभावसोः ।।

सलिङ्गगुदमूर्धास्यनासानेत्रेषु च क्रमात् ।
सर्वाङ्गेषु च जिह्वाश्च वक्ष्यन्ते त्रिविधात्मिकाः ।।

हिरण्या कनका[1] रक्ता कृष्णा चैव तु सुप्रभा ।
बहुरूपाऽतिरक्ता च जिह्वास्सप्तेति सात्त्विकाः ।।

पद्मरागा सुवर्णा च तृतीया भद्रलोहिता ।
लोहिताख्या तथा श्वेता धूमिनी सकरालिका ।।
राजस्यः कथिता जिह्वाः क्रमात्कल्याणरेतसः ।।

विश्वमूर्तिस्फुलिङ्गिन्यौ धूम्रवर्णा मनोजवा ।
लोहिता च करालाख्या काली तामसजिह्विकाः ।।

अनलेरार्धिबिन्द्वन्ताः सादियान्ताक्षरान्विताः ।
सात्त्विका दिव्यपूजासु राजसाः काम्यकर्मसु ।।

तामसाः क्रूरकार्येषु प्रयोक्तव्या विपश्चिता ।
सुरास्सपितृगन्धर्वा यक्षा नागाः पिशाचकाः ।।

राक्षसाश्च क्रमादग्नेराश्रिता रसनास्वमी ।
जिह्वासु त्रिदशादीनां तत्तत्कार्यसमाप्तये ।।

जुहुयाद्वांच्छितां सिद्धिं दद्युस्ता देवता मताः ।
स्वनामसदृशाकाराः प्रायो जिह्वा हविर्भुजः ।।

---

1. गगना इत्यपि पाठः ।

तत्र अनलेरार्धीत्यादेरयमर्थः -

अनल इति रेफः । ईर इति यकारः । अर्धीत्यूकारः षष्ठस्वरः । बिन्दुरित्यनुस्वारः । प्रतिलोमेन सकारादियान्तैः वर्णैर्योजयेत् । सकार - रेप - यकार - षष्ठस्वर - बिन्दूनां कूटं स्र्यूं इति प्रथमः षादिष्वपि एवमेव योजयेत् ।। (एवं सप्तजिह्वा मन्त्रादौ योजयेत् ।।)

अथ होमद्रव्यप्रमाणं शारदातिलकोक्तप्रकारेण लिख्यते -

अथात्र होमद्रव्याणां प्रमाणं तु विधीयते ।
कर्षमात्रं घृतं होमे शुक्तिमात्रं पयः स्मृतम् ।।

कर्षं षोडशमाषपरिमितम् । तद्द्विगुणं शुक्तिः ।।

उक्तानि पञ्चगव्यानि तत्समानि मनीषिभिः ।
तत्समं मधुदुग्धान्नमक्षमात्रमुदाहृतम् ।।

अक्षमात्रं कर्षद्वयमात्रम् ।

दधि प्रसृतिमात्रं स्याल्लाजाः स्युर्मुष्टिसम्मिताः ।

पलद्वयं प्रसृतिः ।

पृथकास्तत्प्रमाणास्स्युः सक्तोवोऽपि तथोदिताः ।
गुळं पलार्धमानं स्यात् शर्करापि तथा स्मृता ।।

ग्रासार्धं चरुमानं स्यात् इक्षुः पर्वावधिः स्मृतः ।
एकैकं पत्रपुष्पाणि तथाऽपूपानि कल्पयेत् ।।

कदलीफलनारङ्गफलान्येकैकशो विदुः ।
मातिलिङ्गं चतुःखण्डं पनसं दशधा कृतम् ।।

अष्टधा नारिकेलानि खण्डितानि विदुर्बुधाः ।
त्रिधा कृतं फलं बैल्वं, कपित्थं खण्डितं द्विधा[1] ।।

उर्वारुकफलं होमे चोदितं खण्डितं त्रिधा ।
फलान्यन्यान्यखण्डानि समिधः स्युर्दशाङ्गुलाः[2] ।।

दूर्वात्रयं समुद्दिष्टं गलूची चतुरङ्गुला ।
व्रीहयो मुष्टिमात्रास्स्युः मुद्गमाषयवा अपि ।।

तण्डुलाः स्युस्तदर्धांशाः कोद्रवा मुष्टिसम्मिताः ।
गोधूमा रक्तकलमा विहिता मुष्टिमात्रतः ।।
तिलाश्चुलुकमात्रास्स्युः सर्षपास्तत्प्रमाणकाः ।।

शुक्तिप्रमाणं लवणं मरीचान्यपि विंशतिः ।
पुरं बदरमानं स्याद्रामठं तत्समं विदुः ।।

चन्दनागरुकर्पूरकस्तूरीकुङ्कुमानि च ।
तिन्त्रीणी बीजमानानि समुद्दिष्टानि देशिकैः ।।

---

1. त्रिधा इति श्रीशारदातिलके - Page 192, Chowkhamba Sanskrit Series (1934)

2. अत्र विशेषः -

सक्षीरा नाधिका न्यूनाः समिधः सर्वकामदाः ।
आर्द्रत्वचं समच्छेदां तर्जन्यङ्गुलिवर्तुलाम् ।।

ईदृशीं होमयेत्प्राज्ञः प्राप्नोति विपुलां श्रियम् ।
श्रौते स्मार्ते च तन्त्रोक्ते समिधः परिकीर्तिताः ।। इति ।।

(तत्र अग्निलक्षणं उच्यते) -

**वैश्वानरं स्थितं ध्यायेत् समिद्धोमेषु देशिकः ।**
**शयानमाज्यहोमेषु निषण्णं शेपवस्तुषु ।।**

**आस्यान्तर्जुहुयाद्वह्ने[1] विपश्चित्सर्वकर्मसु[2] ।**

अथ मातृकासरस्वत्याः पूजार्थं यन्त्रं वक्ष्ये । सर्वाश्च देवता यन्त्रे खलु सम्पूज्याः । तदुक्तं रामकल्पे -

**यन्त्रां मन्त्रामयं प्रोक्तं मन्त्रात्मा देवतेरिता ।**
**पुरा भगवताप्युक्तं तन्त्रे सम्मोहनाह्वये ।।**

**देहात्मनोर्यथाऽभेदो मन्त्रदेवतयोस्तथा ।**
**तस्मात्पीठे महायन्त्रां लिखित्वा तत्र पूजयेत् ।।**
**विना यन्त्रोण चेत्पूजा देवता न प्रसीदति ।**

क्रमदीपिकायामप्येवमेवोक्तम् -

**सालग्रामे मणौ यन्त्रे मण्डले प्रतिमासु वा ।**
**नित्यं पूजा हरेः कार्या न तु केवलके तले ।।** इति ।।

---

1. आस्यादीनां लक्षणमुक्तमन्यत्र -

सधूमोऽग्निः शिरो ज्ञेयो निर्धूमश्चक्षुरेव च ।
ज्वलत्कृशो भवेत्कर्णः काष्ठलग्नश्च नासिका ।।
अग्निर्लालायते यत्र शुद्धस्फटिकसन्निभः ।
तन्मुखं तत्र विज्ञेयं चतुरङ्गुलमानतः ।। इति ।।

वनदुर्गाकल्पे - सर्वकार्यप्रसिद्ध्यर्थं जिह्वायां तत्र होमयेत् ।
चक्षुःकर्णादिकं ज्ञात्वा होमयेद्देशिकोत्तमः ।।
यत्राल्पज्वलनं नेत्रं यत्र भस्म तु तच्छिरः ।
यत्र प्रज्वलितो वह्निः तत्र जिह्वा प्रकीर्तिता ।।

2. विपश्चिदित्यनेन, शत्रुनाशकहोमे एतदङ्गेषु हवनात्तदङ्गक्षयो भवति इत्युक्तं भवति ।।

तस्माद्यन्त्रप्रकारो लिख्यते -

**व्योमाविस्सचतुर्दशस्वरविसर्गार्णस्फुरत्कर्णिकं**
**किञ्जल्कालिखितस्वरं प्रतिदलप्रारब्धवर्गाष्टकम् ।**
**क्ष्माबिम्बेन च सप्तमार्णवयुजाश्राशासु संवेष्टितं**
**वर्णाब्जं शिरसि स्मृतं विषगदप्रध्वंसि मृत्युञ्जयम् ।।**

**अस्यार्थः** - प्रथममष्टदलं पद्मं विलिख्य, तन्मध्ये कर्णिकायां हकारसकारचतुर्दशस्वराख्य औकारविसर्गाणां कूटं ह्सौः इत्येतद्विलिख्य, तन्मध्ये साध्यनामयन्त्रन्यायादीन्, त्र्यम्बकमन्त्रविधाने वक्ष्यमाणेन क्रमेण विलिख्य पुनरेतस्मात्कर्णिकावृत्ताद्बहिः अष्टसु दिक्षु एकैकस्यां दिशि तिर्यग्रेखाद्वन्द्वं ह्रस्वरेखारूपेण विलिखेत् । एवं विलिखिते षोडशसङ्ख्या रेखा भवन्ति । तत्र द्वयोर्द्वयो रेखयोस्तिर्यग्रूपेण विलिखितयोरन्तरालं किञ्जल्ककेसरादि संज्ञं भवति । सर्वयन्त्रेऽपि केसरस्थानमिदमेव । तत्र चतुर्दलपक्षेऽपि षोडशादि दलपक्षेऽपि अष्टदलपक्षोक्तरीत्या तत्तद्दल-सङ्ख्यानुगुण्येन केसरस्थानसङ्ख्याऽपि वर्धनीया इत्येव विशेषः ।।

एवं किञ्जल्कस्थानं सम्पाद्य तेष्वष्टसु किञ्जल्कस्थानेषु षोडश-स्वरवर्णान् सबिन्दुकानेकैकस्मिन् स्थाने द्वौ द्वौ विलिखेत् । एवमेव सर्वत्र केसरस्थाने स्वराक्षरलेखनविषये न्यायः । पुनरष्टसु दलेषु क्रमेण कवर्गं प्राग्दले विलिख्य, तदनन्तरदलमारभ्य क्रमेण चवर्गं टवर्गं तवर्गं पवर्गं यादि चतुष्टयं शादि चतुष्टयं ळादि द्वयं च एतानि सबिन्दुकान्या-लिखेत्। सर्वयन्त्रविषयेऽपि दलेषु वा केसरेषु वा कादिवर्गाक्षरलेखनविधौ सबिन्दूनेव वर्णान् विलिखेत् । यत्र यत्र केसरेषु कादिवर्गा लेखनीया भवन्ति, तत्र प्रायेण यथास्थानं विभज्याक्षराणि विलिखेत् । अवशिष्टाक्षराणि मा लिखेत् । उपरि वक्ष्यमाणाऽघोरयन्त्रे तु अवशिष्टाक्षराणि च विलिखेत् । एवं सर्वत्र यन्त्रन्यायः ।।

पुनरस्मिन्नेव प्रकृते मातृकायन्त्रे पक्षविशेषोऽस्ति । तत्र, षष्ठसप्तमयोर्दलयोः यादि पञ्चकं षादि पञ्चकं च आलिख्य अष्टमे

दले प्रथम-तृतीय-पञ्चम-पञ्चदश-षोडश-स्वराक्षराणि पञ्च विलिखेत् । - इत्येकेषामाचार्याणां पक्षः । पुनः बहिश्चतुरश्रं सशूलाग्रं विलिखेत् । तत्र तु यत्र यत्र चतुरश्रलेखनविधिः तत्र सर्वत्रानुक्तेऽपि सशूलाग्रमेव चतुरश्रं विलिखेत् । एवमत्र चतुरश्रं विलिख्य तस्य पूर्वादि दिक्चतुष्टये 'वं' इति, आग्नेयादि कोणचतुष्टये लकारं उभावप्येवं सबिन्दुकौ विलिखेत् । एवमक्षररूपमम्बुजं साध्यशिरसि स्मृतमुक्तफलदं स्यात् इति । अस्मिन्यन्त्रे पीठार्चनं कुर्यात् ।।

अथ सकलदेवतासमर्चनासाधारणपीठपूजाविधानमुच्यते -

गुं गुरुभ्यो नमः । गं गणपतये नमः - इति पीठस्य दक्षिणवामयोः समभ्यर्च्य,

आधारशक्त्यै । मूलप्रकृत्यै । आदिकूर्माय । अनन्ताय । पृथिव्यै । क्षीरसमुद्राय । श्वेतद्वीपाय । रत्नमण्डपाय । कल्पवृक्षाय । श्वेतच्छत्राय । सितचामराभ्यां । रत्नसिंहासनाय नमः । इत्येतैः आधारशक्त्यादिभिः रत्नसिंहासनान्तैर्मन्त्रैः नमोऽन्तैः सर्वाधस्तादारभ्य उपर्युपरि क्रमेण पीठमध्ये समर्चयेत् । तत्र वैघ्नविषये[1] चेत् क्षीरसमुद्रस्थाने इक्षुसमुद्राय (नमः) इति योजयेत्[2] । शैवादिविषये, 'कैलासगिरये' इति योजयेत्[2] । पुनरपि केवलशैवादौ कल्पवृक्षादयश्च न सन्ति । तत्राप्यैश्वर्यप्रधानविषये चेद्यथायोग्यं योजनीयाः । इतरत्सर्वं सर्वदेवतापीठार्चनेऽपि तुल्यमेव । पुनः

धर्माय नमः । ज्ञानाय नमः । वैराग्याय नमः । ऐश्वर्याय नमः । इति एतान्पीठपादरूपान् पीठस्य आग्नेयादि कोणेषु समर्चयेत् ।। तत्र कल्पान्तरमते -

---

1. विघ्नेशविषये इत्यर्थः ।।

2. इतःपरं 'पुनरपि केवलवैष्णवविषये श्वेतद्वीपायेति, तत्राप्यैश्वर्य प्रधानविषये रत्नद्वीपायेति योजयेत् ।। इत्यधिकः पाठः प्रपञ्चसारसारसङ्ग्रहे ।।

धर्मकन्दाय नमः । ज्ञाननाळाय । वैराग्यकर्णिकायै । ऐश्वर्यदलेभ्यो नमः इति । .अस्मिन्मते उपर्युपरि कन्दादीन् यथोचितस्थानेषु समर्चयेत् ।। पुनः -

अधर्माय । अज्ञानाय । अवैराग्याय । अनैश्वर्याय । - एतान्पीठस्य फलकरूपान् प्रागादि दिक्षु समर्चयेत् ।

सं सत्वाय । रं रजसे । तं तमसे । मं मायायै । विं विद्यायै । अं अनन्ताय । पं पद्माय । अं सूर्यमण्डलाय । उं सोममण्डलाय । मं वह्निमण्डलाय । अं आत्मने । उं अन्तरात्मने । मं परमात्मने । ओं ह्रीं ज्ञानात्मने । - सं सत्वायेत्याद्यैः ज्ञानात्मने नमः इत्यन्तैः आस्तरण-रूपैर्मन्त्रैः पीठमध्ये समर्चयेत् । तत्र वैष्णवपूजायां (मध्ये) अनन्तः । पुनर्मध्ये अष्टदलपद्मं विचिन्त्य प्रागादि दलेषु कर्णिकायां च नवशक्तयश्च आसनमन्त्रदेवताश्च समर्चनीयाः । क्वचित्क्वचित् आसनमन्त्रो नास्ति । तत्र केवलपद्मे सर्वत्र समर्चयेत् । इतरपीठमन्त्राः सर्वत्र समाना एव । अयमेव सर्वदेवताविषयेऽपि पीठार्चनान्यायः । तत्र तु नवशक्त्यासनमन्त्राणामेव सर्वत्र विशेषः । इतरत्कर्वं सकलदेवतापूजाविषयेऽपि तुल्यमेव । तत्र तु वैष्णवे पीठे समर्चयेदित्युक्ते तन्नवशक्त्यासनमन्त्रा एव विवक्षिताः । यथा दौर्गे वैनायके सौरादौ सारस्वते च ।।

अथ पुनरत्र भातृकाया नवशक्तय उच्यन्ते -

मेधायै । प्रज्ञायै । प्रभायै । विद्यायै । श्रियै । धृत्यै । स्मृत्यै । बुद्ध्यै । विद्येश्वर्यै इति नवशक्तयः ।।

ओं ह्रीं स्वर्णाब्जाय[1] सरस्वत्यासनाय नमः इति, पीठमन्त्रः ।।

एतास्तु अष्टसु केसरेषु अष्टौ शक्तयः । नवमी तु कर्णिकायां देवतास्थाने । एवमेव सर्वत्र नवशक्तिस्थानानि । आसनमन्त्रश्च कर्णिकायामेव ।।

---

1. वर्णाब्जाय - इति अभिज्ञाः ।।

इत्थं पीठं संपूज्य, अ(त)स्मिन् मातृकासरस्वतीं समूलमन्त्रेण समावाह्य आवरणैस्सह समर्चयेत् । प्रथमं मातृकाषडङ्गैः प्रथमावरणे केसरेषु समर्चयेत् । तत्र तत्रांगन्यासे उक्तं मन्त्रमुच्चार्य, हृदयाय नमः । शिरसे नमः । शिखायै नमः । कवचाय नमः । नेत्राभ्यां नमः । अस्त्राय नमः । इत्येवं प्रकारेण चतुर्थ्यन्तत्वेन समर्चयेत् . सर्वत्र अङ्गार्चनाविधौ एवमेवन्यायः । तत्र, हृदयादि चतुष्टयमाग्नेयादि कोणचतुष्टयकेसरेषु, पुरतो नेत्रं, चतसृषु दिक्षु अस्त्रं समर्चयेत् । क्वचित्क्वचित् अन्यथा । पूर्वादि दिक्षु हृदयादि, विदिक्षु अस्त्रम् । यथा वराहादि विधाने । तन्त्रसमुच्चये तु - शैवे, आग्नेयैशान्यनैऋत्यादिषु हृदयादि, वैष्णवे प्रागादि - इति विशेष उक्तः । अङ्गावृतौ सर्वत्रैवमेव स्थाननियमः । तदुक्तं च प्रपञ्चसारे प्राग्दीक्षापटले - 'हृदयाद्यश्रिषु पुरतो नेत्रं दिशां क्रमात् पुनरस्त्रं च समर्चयेत्' इति ।

पुनरेतासामङ्गदेवतानां रोचींष्युच्यन्ते -

**हारस्फटिक-कलायाञ्जन-पिङ्गलवह्निरोचिषो ललनाः ।**
**अभयवरोद्यतहस्ताः प्रधानतनवोऽङ्गदेवताः कथिताः ।।** इति ।।

क्रमदीपिकायामप्येवमेवोक्तम् -

**तेजोरूपास्तद्बहिरङ्गानि च केसरेषु समभियजेत् ।**
**हुतवहनिर्ऋतिसमीरणशिवदिक्षु हृदादिवर्मपर्यन्तम् ।।**

**पूर्वादि दिक्ष्वथास्त्रं क्रमेण गन्धादिभिस्सुशुद्धमनाः ।**
**मुक्तेन्दुकान्त-कुवलय-हरिनील-हुताशनप्रभाः प्रमदाः ।।**

**अभयवरस्पुरितकराः प्रसन्नमुख्योऽङ्गदेवताः स्मार्याः ।।** इति

तत्र तेजोरूपा इत्यस्य पदस्य पूर्वत्रान्वयः ।।

तत्र, पूर्वादि दिङ्नियम उच्यते -

**पूज्यपूजकयोर्मध्यं पूर्वमित्यभिधीयते ।**
**प्रादक्षिण्येन विज्ञेया प्राच्याग्नेयादि कल्पना ।।**

**यत्रैव भास्वानुदयं प्रयाति प्राचीमिमां वेदविदो वदन्ति ।**
**मध्ये तथा पूजकपूज्ययोश्च सदागमज्ञाः प्रवदन्ति तां तु ।।**

इन्द्रादीनां विकल्पितदिक्क्रमेणैव पूजाक्रमः ।

**न तु यथास्थितदिक्क्रमेण ।। पुनः -**

**अं क ख ग घ ङ आं नमः ।**
**इं च छ ज झ ञ ईं नमः ।**
**उं ट ठ ड ढ ण ऊं नमः ।**
**ऋं त थ द ध न ॠं नमः ।**
**लृं प फ ब भ म लॄं नमः ।**
**एं य र ल व ऐं नमः ।**
**ओं श ष स ह औं नमः ।**
**अं ळ क्ष अः नमः ।** - एतेन सानुस्वारस्वरद्वन्द्वपुष्टतेन वर्गाष्टकेन द्वितीयावृतिः ।। पुनः -

ब्राह्म्यै । माहेश्वर्यै । कौमार्यै । वैष्णव्यै । वाराह्यै । इन्द्राण्यै । चामुण्डायै । (महालक्ष्म्यै।।) - एताभिस्तृतीयावृतिः ।

तत्र, मातरः सप्तसङ्ख्याकाः किल । पूजाविषये तु सर्वत्राष्ट सङ्ख्याकाः । तस्मात् अष्टमस्थाने महालक्ष्मीं पूजयेत् । "महालक्ष्म्यै नमः" इति । क्वचित्क्वचिदन्यथा । सौरादि विषये "अरुणाय नमः" इति, अष्टमस्थाने । दुर्गाविषये चेत्, "चण्टिकायै नमः" इत्यष्टमी । अन्यत्र सर्वत्राष्टमी तु महालक्ष्मीः ।

तदुक्तं च -

**ब्रह्माणि माहेश्वरी कौमारी वैष्णवी च वाराही ।**

**इन्द्राणी चामुण्डा समहालक्ष्मीश्च मातरः प्रोक्ताः ।।**

इति, सर्वत्र मातृणामष्टसङ्ख्याकत्वं उक्तम् ।।

**यदाऽष्टधा सा गुणिता तदा प्रकृतिभेदिनी ।**

**अष्टाक्षरा हि वस्वाशा मातृमूर्त्यादि भेदिनी ।।**

इति अष्टसंख्याकानां प्रकृत्यष्टाक्षरादीनां मध्ये मातृणां परिगणितत्वात् । तत्र मातृणां वर्णादय उच्यन्ते ताश्च, श्वेताक्षवलयपुस्तकधारिण्यः ।

**ब्रह्माणी कनकवर्णा अक्षसूत्रकमण्डलुवराभयधरा ।**

**शूल-परशु-दुन्दुभि कपालधरा माहेश्वरी ।**

**अंकुश-दण्ड-खट्वांग पाशधरा कौमारी ।**

**चक्र-घण्टा-कपाल-शंखधरा वैष्णवी ।**

**मुसल-खड्ग-खेटाभयधरा वाराही ।**

**अंकुश-तोमरपाश-कुलिशधरा इन्द्राणी ।**

**शूल-कपाल नृशिरः कृपाणधरा चामुण्डा ।**

**रक्ताक्षस्रुक्-बीजपूर-कपाल-पंकजधरा महालक्ष्मीः ।**

पुनः व्यापिन्यादिभिः चतुर्थ्यावृत्तिः ।

व्यापिन्यै । पालिन्यै । चापिन्यै । क्लेदिन्यै । धारिण्यै । मालिन्यै । हंसिन्यै । शान्त्यै । इति । एतास्तु कलाः युग्मशश्चाष्टवर्गानिति, मूलग्रन्थस्य च शब्देन चतुर्थावरणत्वेन सूचिता इति विवरणकारैरुक्तम् ।।

पुनः इन्द्रादिभिः पञ्चमी ।

इन्द्राय सुरधिपतये कुलिशधराय ऐरावतवाहनाय सरस्वतीपार्षदाय नमः । अग्नये तेजोऽधिपतये शक्तिधराय मेषवाहनाय सरस्वतीपार्षदाय नमः । यमाय प्रेताधिपतये दण्डधराय महिषवाहनाय सरस्वतीपार्षदाय

नमः । निर्ऋतये रक्षोऽधिपतये खड्गधराय प्रेतवाहनाय सरस्वतीपार्षदाय नमः । वरुणाय जलाधिपतये पाशधराय नक्रवाहनाय सरस्वतीपार्षदाय नमः । वायवे प्राणाधिपतये अङ्कुशधराय हरिणवाहनाय सरस्वती-पार्षदाय नमः । सोमाय नक्षत्राधिपतये गदाधराय [1]शशवाहनाय सरस्वतीपार्षदाय नमः । ईशानाय विद्याधिपतये त्रिशूलधराय वृषभ-वाहनाय सरस्वतीपार्षदाय नमः । अनन्ताय नागाधिपतये चक्रधराय कूर्मवाहनाय सरस्वतीपार्षदाय नमः । ब्रह्मणे लोकाधिपतये पद्मधराय हंसवाहनाय सरस्वतीपार्षदाय नमः ।। एतानिन्द्रादीन् लमादितत्त द्बीजपुरस्सरं उक्तविशेषणैस्सहैद सर्वत्र प्रागादिषु ऊर्ध्वान्तासु दिक्षु समर्चयेत् । यकारादयोऽष्टौ वर्णाः वाय्वग्नीन्द्रवरुणेश्वरराक्षसेन्दु प्रेतेश-बीजानि भुवनेशीपाशबीजे च । तत्तद्बीजयोगस्तु विवरणकारैरुक्तः ।।

तदुक्तं -

**इन्द्राग्नि-यम-निशाचर-वरुणानिल-शशिशिवाऽहिपतिविधयः ।**
**जात्यधिपहेतिवाहनपरिवारान्ताः क्रमेण यष्टव्याः ।। इति ।।**

तत्र क्वचित्क्वचित् अनन्तान्ता लोकपालाः । अस्मिन् शास्त्रे तु अहिपतिविधय इति विध्यन्तत्वेनोक्ताः ।

क्रमदीपिकायामप्येवमेवोक्तम् - "हरि-हव्यवाट्तरणिजक्षपावार्पति-वायु सोम-शिव-शेष-पद्मजान् प्रयोजयेत् स्वदिक्ष्वमलधीः" । इति ।।

तत्र तु सरस्वतीपूजाविषये चेत् 'सरस्वतीपार्षपदाय' इति योजयेत् । इतरत्र तु तत्तद्देवतापार्षदत्वेन योजयेत् इति विशेषः ।।

पुनः एतेषामिन्द्रादीनां रोचींष्युच्यन्ते -

**पीतः पिङ्गः कृष्णो**
**धूम्रः श्वेतश्च धूम्रसितशुक्लाः ।**
**काशारुणाम्बुजाभा**
**लोकेशा वासवादयः प्रोक्ताः ।।**

एवं क्रमेण तेषां रोचींषि ध्येयानी ।

---

1. अश्ववाहनाय इति पाठः सार्वत्रिकः प्रसिद्धश्च ।।

क्रमदीपिकायामप्येवमेवोक्तम् -

**कपिश-कपिल नील श्यामल-श्वेत-धूम्र-**
**मल-सित-शुचि-रक्ता वर्णतो वासवाद्याः ।**
**करकमलविराजत्स्वायुधा दिव्यवेषाः**
**विविध-मणिगण-रुक्-प्रस्फुरद्भूषणाढ्याः ।।** इति ।।

लोकपालपूजाविधौ सर्वत्र एवमेव न्यायः ।।

पुनस्तत्र तु, यत्रावृतिविधौ इन्द्रादिभिरेवावृत्यवसानमुच्यते- इन्द्रादिभिस्तृतीया, इन्द्रादिभिः पञ्चमी इति पञ्चावरणमीरितम् । इन्द्रादिभिः सप्तमीति सप्तावरणमीरितम् । इत्येवं प्रकारेण । तत्रापि, यत्र पुनः इन्द्रादिभिश्चतुर्थी, इन्द्रादिभिः षष्ठी इत्येतावदेवोक्त्वा आवरणावसानग्रहणं च न क्रियते, वज्राद्यावरणग्रहणं च न क्रियते, तत्रोभयत्र एतैर्वज्रायुधवाहनपरिषत्पदा(पारिषदपाद)दिविशेषणैः विशिष्टानामेवेन्द्रादीनां समर्चितत्वात् वज्रादयः न पृथक् आवरणे समर्चनीयाः । यत्र पुनः, इन्द्रादिभिः सप्तमी, वज्रादिभिरष्टमी-इत्येवं प्रकारेण वज्राद्यावृतिः पृथगेवोच्यते, तत्र तु सर्वत्र यद्यपि वज्राद्यायुधधृति-विशेषणयुक्तता एवेन्द्रादयः समर्चिताः, तथापि वज्रादयस्तु पृथगावृतो समर्चनीयाः ।।

तत्प्रकार उच्यते -

वज्राय । शक्त्यै । दण्डाय । खड्गाय । पाशाय । अङ्कुशाय । गदायै । त्रिशूलाय । चक्राय । नलिनाय (नमः) ।। इत्येतानि इन्द्रादीनां अस्त्राणि प्रागादिक्रमेण समर्चनीयानि ।। तदुक्तम् -

**वज्रं शक्तिर्दण्डः खड्गः**
**पाशाङ्कुशौ गदाशूलौ ।**
**रथचरणनलिनसंज्ञौ**
**प्रोक्तान्यस्त्राणि लोकपालानाम् ।।** इति ।।

क्रमदीपिकायामप्येवमेवोक्तम् -

**दम्भोलिशक्त्यभिधदण्डकृपाणपाश-**
**चण्डांङ्कुशाह्वयगदात्रिशिरस्वारिपद्माः ।**
**अर्च्या बहिर्निजसुलक्षितमौलियुक्ताः**
**स्वस्वायुधाभयसमुद्यतपाणिपद्माः ।।** इति ।।

एतेषां रोचींष्युच्यन्ते -

**पीत-हिम-जलद-गगन-अचिरप्रभा-रक्त-कुन्द-नीलरुचः ।**
**करवन्दारुणवर्णाः[1] प्रोक्तास्स्युः वर्णतोऽपि वज्राद्याः ।।** इति ।।

क्रमदीपिकायामुक्तम् -

**कनक-रजत-तोयदाभ्र शंखारुण-हिम-नील-जपा-प्रवाल-भासः ।**
**क्रमत इति रुचा तु वज्रपूर्वा रुचिरविलेपनवस्त्रमाल्यभूषाः ।।**

एतैर्वज्रादिभिः पञ्चम्यावृतिः । एवं दिनशो मातृकासरस्वतीं पूजयेत् ।

तत्र प्रथमं तावत् सकलदेवतापूजासाधारणशंखपूरणविधिं क्रमदीपिकोक्तप्रकारेण वक्ष्ये -

**आरचय्य भुवि गोमयाम्भसा स्थण्डिलं निजममुत्र विष्टरम् ।**
**न्यस्य तत्र विहितास्पदोऽम्भसा शंखमस्त्रमनुना विशोधयेत् ।।**

**तत्र गन्धसुमनोक्षतानथो निक्षिपेत् हृदयमन्त्रमुच्चरन् ।**
**पूरयेद्विमलपाथसा सुधीरक्षरैः प्रतिगतैश्शिरोऽन्तिकैः ।।**

**पीठशंखसलिलेषु मन्त्रवित् वह्निवासरनिशाकृतां क्रमात् ।**
**मण्डलानि विषकश्रवोक्षरैरर्चयेद्वदनपूर्वदीपितैः ।।**

---

1. कुरुविन्दारुणवर्णाः इति पाठः प्रपञ्चसारसारसङ्ग्रहे ।

तत्र तीर्थमनुनाऽभिवाहयेत् तीर्थमुष्णरुचिमण्डलात्पुनः ।
स्वीयहृत्कमलतो हरिं तथा गालिनीं च शिखया प्रदर्शयेत् ।।

तज्जलं नयनमन्त्रवीक्षितं वर्मणा समवकुण्ठ्य दोर्युजा ।
मूलमन्त्रसकलीकृतं न्यसेत् अंगकैश्च कलयेद्दिशोऽस्त्रशः ।।

अक्षतादि युतमच्युतीकृतं संस्पृशन् जपतु मन्त्रमष्टशः ।
किञ्चन क्षिपतु वर्धनीजले प्रोक्षयन्निजतनुं ततोऽमुना ।।

त्रिःकरेण मनुनाऽखिलं तथा साधनं कुसुमचन्दनादिकम् ।
शंखपूरणविधिस्समीरितो गुप्त एष यजनाग्रणीरिह ।।

"गङ्गे च यमुने चैव गोदावरि सरस्वति ।
नर्मदे सिन्धु कावेरि जलेऽस्मिन्सन्निधिं कुरु ।।"

एष तीर्थमनुः प्रोक्तः दुरितौघनिवारणः ।
कनिष्ठङ्गुष्ठकौ सक्तौ करयोरितरेतरम् ।।

तर्जनीमध्यमानामास्संहता भुग्नसंज्ञिताः ।
मुद्रैषा गालिनी प्रोक्ता शंखस्योपरि चालिता ।। इति ।।

'आरचय्य भुवि गोमयाम्भसा स्थण्डिलं निजममुत्र विष्टरं' इत्यादीनां, 'मुद्रैषा गालिनी प्रोक्ता शंखस्योपरि चालिता' इत्यन्तानां ग्रन्थानामयमर्थः -

प्रथमं निजासने उपविश्य, तत्पुरतो गोमयाम्भसा स्थण्डिल-शब्दवाच्यं मण्डलं विलिप्य, पुनः यद्यद्देवताविषया पूजा तत्तद्देवता-मूलमन्त्रस्य ये षडंगमन्त्राः तेषामन्ते योऽस्त्रमन्त्रः 'अस्त्राय फट्' इत्यन्तः तेनास्त्रमन्त्रेण शङ्खं प्रक्षाल्य, पुनः, तस्याङ्गस्य हृदयस्थानोक्तेन 'हृदयाय नमः' इत्यन्तेन मन्त्रेण शङ्खे गन्धपुष्पाक्षतान् निक्षिप्य, पुनः, मातृकावर्णं प्रतिलोममुच्चार्य, तदन्ते पूर्वोक्ताङ्गमन्त्राणां मध्ये शिरस्थाने उक्तं 'शिरसे स्वाहा' इत्यन्तं मन्त्रमुच्चरन् जलेन शङ्खमापूर्य, पुनः,

विषशब्दवाच्येन मकारेण वदनपदवाच्य - बिन्दुयुक्तेन, 'मं वह्निमण्डलाय दशकलात्मने नमः' इत्येवं शङ्खपीठे समभ्यर्च्य, पुनः, ककारेण सूचितं मातृकान्यासे शिरस्थाने उक्तं अकारं, तदपि वदनपदवाच्येन बिन्दुना युक्तं वासरकृन्मण्डलपदोत्तरं च, 'अं सूर्यमण्डलाय द्वादशकलात्मने नमः' इत्येवंप्रकारेण शङ्खं समभ्यर्च्य, पुनः श्रवःपदसूचितं मातृकान्यासे श्रोत्रस्थाने उक्तं उकारं, तदपि वदनपदवाच्यं मातृकान्यासे मुखस्थाने वृत्ताकारन्याससूचितं बिन्दुं, तेन बिन्दुना युक्तं निशाकृन्मण्डलपदोत्तरं च, उं सोममण्डलाय षोडशकलात्मने नमः इत्येवं प्रकारेण शंखस्थजले समर्चयेत् ।।

**गङ्गे च यमुने चैव गोदावरि सरस्वति ।**
**नर्मदे सिन्धु कावेरि जलेऽस्मिन्सन्निधिं कुरु ।।**

इत्यनेन तीर्थमन्त्रेण तीर्थं आदित्यमण्डलात् शङ्खे समावाह्य, पुनर्हृदयकमलात् विष्णुं च साध्यमन्त्रेण तस्मिन् जले समावाह्य, पूर्वोक्तांगमन्त्राणां मध्ये 'शिखायै वषट्' इत्यन्तेन शिखामन्त्रेण गालिनीमुद्रां तस्मिन्जले प्रदर्शयेत् ।।

गालिनीमुद्राप्रकारस्तु -

**कनिष्ठाङ्गुष्ठकौ सक्तौ करयोरितरेतरम् ।**

इत्याद्युक्तप्रकारः । पुनः पुर्वोक्तांगमन्त्राणां मध्ये, 'नेत्राभ्यां वौषट्' इत्यन्तेन नेत्रमन्त्रेण तज्जलं संवीक्षयेत् । तदुक्तं -

**ईक्षणं नेत्रमन्त्रेण न चेन्मूलेन मन्त्रवित् ।**

पुनः पूर्वोक्तांगमन्त्राणां मध्ये वर्मस्थाने उक्तेन 'कवचाय हुं' इत्यन्तेन कवचमन्त्रेण तत्तीर्थं हस्तद्वयेन समवकुण्ठ्य - अधोमुखेन

गृहीततर्जनीद्वयेन परिभ्रमणं अवकुण्ठनमुद्रा - पुनः, तत्तीर्थस्य देवतानां तत्तन्मूलमन्त्रव्यापकेन सकलीकृत्य मूलमन्त्रस्याङ्गैः अङ्गन्यासं कृत्वा "अस्त्राय फट्" इत्यन्तेन दशदिग्बन्धनं कुर्यात् ।। पुनः, अक्षतादि युतं अच्युतस्वरूपीकृतं तज्जलं स्पृशन् मूलमन्त्रं अष्टवारं जपेत् । पुनः, तज्जलं किञ्चिदुपस्थितवर्धनीपात्रे क्षिपेत् । अवशिष्टेन निजतनुं संप्रोक्ष्य पुनरप्यवशिष्टेन तीर्थजलेन त्रिवारं मूलमन्त्रमुच्चरन् गन्धकुसुमादीन् संप्रोक्षयेत् । एवं शंखपूरणविधिः, सर्वपूजासाधारणोऽयम् ।।

अथ आत्मपूजाविधिः "तन्त्रसमुच्चयो"क्तप्रकारेण लिख्यते -

न्यासक्रमान्निजतनो प्रयजेत पीठं
हृद्वारिजन्मनि समर्च्य परं महस्तत् ।
त्र्याधारभाञ्ज्यणुमहांसि निरञ्जनांशै-
रिष्ट्वा नयेत् प्रणवतः क्रमवित्तदैक्यम् ।।

आयम्य वायुमणुना सकलीक्रियां च
कृत्वाऽऽसनाद्युपहृती क्रमशः समर्च्य ।
तारोपचारनिजमूलतदक्षराद्यैः
न्यासक्रमादभियजेज्जलगन्धपूर्वैः ।।

मूलेन गन्धरसलिप्ततनुर्मुरारौ
स्वैर्मूर्तिपञ्जरपदेष्वणुभिर्द्विषड्भिः ।
फाले गलेंऽसयुगळे हृदि पञ्चमन्त्रै-
रीशेऽनुलिम्पतु परेष्विति मूलतोऽथ ।।

मूलेन मूर्ध्नि मनुना निखिलेन पञ्च-
कृत्वः किरीटमनुना च रथाङ्गपाणौ ।

स्थाण्वात्मकेन कुसुमाञ्जलिमीश्वरे च
कृत्वा यजेद्विविधसूनवरैरथेति ।।

श्वेतारुणक्रमकृतोभयपार्श्वयोगान्
कुर्याद्धरौ द्वितुलसीकरवीरपद्मान् ।
नाभ्यात्म[1] चिल्ल्यवधिके षडशेषमङ्गे-
ऽशेषे शिवेऽर्कयुगपूर्वकमेतदिष्टम् ।।

धूपं च दीपं च समर्प्य तस्मै
निवेद्य बुद्ध्या परचित्सुधार्घ्यम् ।
दत्वाऽर्चयित्वा परितोष्य चैनं
लयाङ्गनिष्ठं च समादधीत ।।

।। इत्यात्मपूजायाः समुच्चयोक्तो मूलग्रन्थः ।।

## तत्र आवाहनविधानमुच्यते

जितं ते पुण्डरीकाक्ष नमस्ते विश्वभावन ।
सुब्रह्मण्य नमस्तेऽस्तु नमः पुरुषपूर्वज ।।

इति, अन्तेप्रणवपूर्वकं मूलमन्त्रमुच्चरेत् । अनेन मन्त्रेणैव वैष्णवदेवतां साक्षात्पुष्पहस्तः, आत्मनः समावाहयेत् । शैवदेवताऽऽवाहनं चेत् त्रिंकारप्रणवपूर्वकं,

नमोऽस्तु स्थाणुभूताय [2]ज्योतिर्लिंगादृतात्मने ।
चतुर्मूर्तिवपुश्छायाभासितांगाय शम्भवे ।। इति ।।

---

1. चिल्लि eye brow, 2. ज्योतिर्लिङ्गामृतात्मने इति प्रसिद्धः पाठः ।।

अस्य मन्त्रस्यान्ते प्रणवपूर्वकं मूलमन्त्रमुच्चरेत् । अनेन मन्त्रेण समावाहयेत् ।

विनायकं चेत् पूर्ववदेव त्रिवारप्रणवपूर्वकं "गणानां त्वा गणपतिं" इत्यृगन्ते प्रणवपूर्वकं मूलमुच्चरेत् । अनेन मन्त्रेण गणपतिं समावाहयेत् । दौर्गे " तामग्निवर्णां " इत्यृगन्ते मूलमन्त्रमुच्चार्यावहयेत् । तत्र सर्वत्र मन्त्रान्ते, "ओं आवाहयामि" इति उच्चार्यात्मन आवाहयेत् ।।

तत्र प्रणवोपचारमूलानां विनियोगः "तन्त्रसमुच्चयो"क्तप्रकारेण लिख्यते -

**मूर्तिं च तत्र मनुबिम्बमयीं प्रकल्प्य**
**तत्राभिवाहयतु मन्त्रचितिं च मन्त्री ।**
**तारत्रयं चलनसंग्रहणोद्गमार्थ-**
**मुक्तोपचारनुतिकृशिजहृत्सरोजात् ।।**

**उन्नीय चेतनकलां विरहय्य बन्धात्**
**तारेण चात्मनि परे ध्रुवतो विलाप्य ।**
**मन्त्रात्मना परिणमय्य सुधीः सुसम्बु-**
**ध्यागच्छयुग्ममभिधाय ततोऽञ्जलिस्थे ।।**

**आवाहयामि मनुना हृतगन्धपुष्प-**
**तोयेऽवतार्य तनुयादथ मन्त्रमूर्तौ ।। इति ।।**

तत्र, आवाहनभावनाप्रकारः कल्पान्तरोक्तः कथ्यते -

जल-गन्ध-पुष्पाक्षतान् हस्ताञ्जलौ गृहीत्वा स्वहृदयकमलस्थितं देवं अञ्जलिमुद्रया सह प्राणवायुमार्गेण भ्रूमध्यमण्डलपकृतविश्रामपूर्वकं ब्रह्मरन्ध्रं नीत्वा हृदयपर्यन्तमवरोप्य प्राणवायुना सह पुष्पाञ्जलावानीय विग्रहमूर्ध्नि[1] देवतामावाहयेत् ।।

---

1. यन्त्रपूजायां तु विन्दुमध्ये भाव्यमानदेवतामूर्ध्नि आवाहयेत् ।।

तत्र आवाहनविषयो मन्त्रदेवताप्रकाशिकायामुक्तः -

**स्थण्डिले नित्यमेवं स्यात् प्रतिमायां कृताकृतम् ।**
**चलायामचलायां तु सालग्रामशिलासु वा ।।**

**न कर्तव्यमिहावाहप्रमुखं पूर्वमेव तत् ।। इति ।।**

एवमावाह्य आवाहनमुद्राः प्रदर्शयेत् । आवाहनमुद्राप्रकारः कल्पान्त-रोक्तप्रकारेण लिख्यते -

तत्र, आवाहनमुद्रा, स्थापनी मुद्रा, सन्निधापनमुद्रा, संरोधन मुद्रा सम्मुखीकरण मुद्रा, प्रार्थनी मुद्रा इत्येवं षड्विधा आवाहनमुद्राः । इदानीं तत्प्रकाराः कथ्यन्ते ।

**हस्तौ तु प्राञ्जली कृत्वाऽनामिकामूलपर्वणोः ।**
**अङ्गुष्ठौ निक्षिपेत्सेयं मुद्रा त्वावाहनी मता ।।**

**अधोमुखी त्वियं चेत्स्यात्स्थापिनी मुद्रिका मता ।**
**उच्छिताङ्गुष्ठमुष्ट्योस्तु संयोगस्सन्निधापनी ।।**

**अन्तः प्रवेशिताङ्गुष्ठा सैव संरोधिनी मता ।**
**मुष्टिद्वयस्थिताङ्गुष्ठौ सम्मुखौ तु परस्परम् ।।**

**संश्लिष्टावुच्छ्रितौ कुर्यात्सेयं सम्मुखमुद्रिका ।**
**प्रसृताङ्गुलिको हस्तौ मिथश्श्लिष्टौ च सम्मितौ ।।**

**कुर्यात्स्वहृदये सैव मुद्रा प्रार्थनिसंज्ञिता ।**
**सर्वासां देवतानां च षण्मुद्राः पूजने स्मृताः ।। इति ।।**

तत्तन्मुद्राप्रदर्शने तत्र तत्र -

आवाहितो भव । स्थापितो भव । सन्निहितो भव । सन्निरुद्धो भव । सम्मुखो भव । प्रसीद प्रसीद ।।

इत्येवमुच्चरेत् । एवमेव सर्वदेवतावाहनेऽपि इमा षण्मुद्राः प्रदर्शनीयाः । पुनः मूलमन्त्रेण त्रिवारं व्याप्य सकलीकृत्य पुनर्मातृकान्यासः कर्तव्यः । तदुक्तं च क्रमदीपिकायाम् -

**सकलङ्कृतेऽत्र कुसुमादिभि-**

**रप्यभिवाहयेत्परतरं महः ।**

**सकलीविधाय कलशस्थ-**

**ममुं हरिमर्णतत्वमनुविन्यसनैः ।। इति ।।**

(अनन्तरं उपचारान् कुर्यात्) तत्र, षोडशोपचारः दशोपचारः पञ्चोपचारश्चेति त्रिविधाः पूजोपचाराः[1] तान् क्रमेण वक्ष्ये --

**आसनस्वागते सार्घ्यपाद्ये साचमनीयके ।**

**मधुपर्काचमस्नानवसनाभरणानि च ।।**

**सगन्धसुमनोधूपदीपनैवेद्यवन्दनान् ।**

**प्रयोजयेदर्चनायां उपचारास्तु षोडश ।।**

**अर्घ्यपाद्याचमनकमधुपर्काचमान्यपि[2] ।**

**गन्धादयो निवेद्यान्ता उपचारा दश क्रमात् ।।**

---

उपचारशब्दार्थः ज्ञानमालायामुक्तः -

भक्त्या चैते कृता देवे साधकं देवसन्निधिम् ।

चारयन्ति यतस्तस्मादुच्यन्ते ह्युपचारकाः ।।

समीपे चारणाद्वापि फलानान्ते तथोदिताः ।।

मधुपर्कान्ते आचमनमुपलक्षणम् । तदुक्तं महाकपिलपञ्चरात्रे - "स्नाने वस्त्रे तथा भक्षे दद्यादाचमनीयकम्" इति । ज्ञानमालायामपि - "पाद्ये च मधुपर्के च स्नाने वस्त्रोपवीतयोः । भोजने चाचमनं देयम्" इति ।।

गन्धादिका निवेद्यान्ता पूजा पञ्चोपचारिका ।
सपर्यास्त्रिविधाः प्रोक्ताः तासमेकां समाचरेत् ।।

अथ अर्घ्याद्युपचाराणां द्रव्यमुच्यते -

गन्धपुष्पाक्षत-यव-कुशाग्र-तिल-सर्षपाः ।
दूर्वा चेति क्रमादर्घ्यद्रव्याष्टकमुदीरितम् ।।

पाद्यं श्यामाकदूर्वाब्ज-विष्णुक्रान्ताभिरीरितम् ।
जाती लवङ्ग-तक्कोलैर्मतमाचमनीयकम् ।।

मधुपर्कं च सक्षौद्रं दधि प्रोक्तं मनीषिभिः ।
शुद्धाभिरद्भिर्विहितं पुनराचमनीयकम् ।।

चन्दनागरुकर्पूरपङ्कं गन्धमिहोच्यते ।
तुलस्यौ पङ्कजे जात्यौ केतक्यौ करवीरकौ ।।

शस्तानि दश पुष्पाणि तथा रक्तोत्पलानि च ।
उत्पलानि च नीलानि कल्हारकुमुदानि च ।।

मालती-कुंन्द-मन्दार-नन्द्यावर्तादिकानि च ।
सुगन्धीनि सुरूपाणि स्वागमोक्तानि यानि च ।।

मुकुलै पतितैर्म्लानैः जीर्णैर्वा जन्तुदूषितैः ।
आघ्रातैरङ्गसंस्पृष्टैः पर्युषितैश्च नार्चयेत् ।। (?)

सगुग्गुल्वगरूशीर-सिताज्य-मधुचन्दनैः ।
साराङ्गारविनिक्षिप्तैर्मन्त्री नीचैः प्रधूपयेत् ।।

नीचैरिति । देवताया अधःप्रदेशे इत्यर्थः ।।

**गोसर्पिषा वा तैलेन वर्त्या च लघुगर्भया ।**
**दीपितं सुरभिं शुद्धं दीपमुच्चैः प्रकल्पयेत् ।।**

उच्चैरिति । देवताया उच्चै प्रदेशे इत्यर्थः ।।

**(शाल्यन्नेन) शुद्धेन पायसेन च सर्पिषा ।**
**सितोपदेशकदलीदध्याद्यैश्च निवेदयेत् ।।**

एतैर्द्रव्यैरर्घ्यादयो दातव्याः । तत्र अर्घ्यं, शिरसि[1] । मधुपर्क, मुखे । एवमुपचारान् उक्तैर्द्रव्यैःसाकं भूषणान्तं जलैरेव तत्तद्देवता चतुर्थ्यन्तनमोन्तपूर्वकं, "विष्णवे नमः आसनं समर्पयामि" इत्यादि प्रकारेण दत्वा, पुनः गन्धाद्युपचारान् स्वरूपेणैव दद्यात् ।। तत्प्रकार उच्यते -

प्रथमं मूलमन्त्रेण जलैस्त्रिवारं मूलदेवतां समभ्यर्च्य, किरीट-गङ्गाजटादि भूषणायुधाङ्गमन्त्रवर्णान् समभ्यर्च्य, पुनर्गन्धैश्चापि एवमेव मूलदेवतासमर्चना त्रिवारपूर्वकं आवृतीश्च समर्चयेत् । पुनः पुष्पैश्चाप्येवमेव समभ्यर्च्य, मूलमन्त्रपुरस्सरं आवृतिमन्त्रान् सर्वान् जपन् वा "धूरसीत्यादि" वक्षयमाणमन्त्रं जपन्वा गन्धादिभिस्समर्चितघण्टां वामकरेण वादयन् धूपं प्रदर्शयेत् । पुनस्तथैव सर्वान्मन्त्रान् जपन्वा वक्ष्यमाणदीपमन्त्रं जपन्वा घण्टां वादयन् दीपं च प्रदर्शयेत् । तत्र धूपदीपप्रदर्शनामन्त्रमेव तूष्णीमेकैकवारं जलं दत्वा, धूपमुद्रां दीपमुद्रां च तत्तन्मन्त्रेण, 'ओं धूपं कल्पयामि । ओं दीपं कल्पयामि ।' इति प्रदर्शयेत् ।।

---

1. अर्घ्यं दिशेत्ततो मूर्ध्नि शिरो मन्त्रेण देशिकः इति, ग्रन्थान्तरेऽपि ।। यत्रार्घ्यादि प्रोक्तं तत्र द्रव्याभावे केवलतण्डुलानेव निक्षिपेत् । "द्रव्याभावे प्रदातव्याः क्षालितास्तण्डुलाः शुभाः ।" इति, मन्त्रतन्त्रप्रकाशे ।।

अथ क्रमदीपिकोक्तप्रकारेण[illegible] धूपदी[illegible]दर्शनप्रकार उच्यते -

सारा‌ङ्गारैर्घृतविलुलितैर्झर्झसैस्संविकीर्णैः
गुग्गुल्वाद्यैर्घनपरिमलं धूपमापाद्य मन्त्री ।
दद्याच्छीचैर्दनुजमथनायापरेणाथ दोष्णा
घण्टां गन्धाक्षतकुसुमकैरर्चितं वादयानः ।।

तद्वद्दीपं सुरभिघृतसंसिक्तकर्पूरवर्त्या
दीप्तं सृष्ट्याद्यतिविशदधीः पद्मपर्यन्तमुच्चैः ।
दत्वा पुष्पाञ्जलिमपि विधायार्पयित्वा च पाद्यं
साचामं कल्पयतु विपुलस्वर्णपात्रे निवेद्यम् ।। इति ।।

एवं धूपदीपौ प्रदर्श्य, पुनर्नैवेद्यं समर्पयेत् ।।

अथ सकलदेवतानैवेद्यविधिं क्रमदीपिकोक्तप्रकारेण वक्ष्ये -

दत्वा पुष्पाञ्जलिमपि विधायार्पयित्वा च पाद्यं
साचामङ्कल्पयतु विपुलस्वर्णपात्रे निवेद्यम् ।
सुरभितरेण दुग्धहविषा सुसितेन सता
सममुपदंशकैरुचिरहृद्यविचित्ररसैः ।।

दधि नवनीतनूतनसितोपलपूवळिका-
घृतगुळनारिकेलकदलीफलपुष्परसैः ।

पूवळिका अपूपम् ।।

अस्त्रोक्षितं तदरिमुद्रिकयाऽभिरक्ष्य
वायव्यतोयपरिशोषितमग्निदोष्णा ।
सन्दह्य वामकरसौधरसाभिपूर्णं
मन्त्रामृतीकृतमथाभिमृशन्प्रजप्यात् ।।

मनुमष्टशः सुरभिमुद्रिकया
    परिपूर्णमर्चयतु गन्धमुखैः ।
हरिमर्चयेदथ कृतप्रसवा-
    ञ्जलिरास्यतोऽस्य विसरेच्च मुहुः ।।

वीतिहोत्रदयितान्तमुच्चर
    न्मूलमन्त्रमथ निक्षिपेज्जलम् ।
अर्चयेत्तदमृतात्मकं हवि-
    र्दोयुजा सकुसुमं समुद्धरन् ।।

निवेदयामि भवते जुषाणेदं हविर्हरे ।
नैवेद्यार्पणमन्त्रोऽयं सर्वार्चासु निजाख्यया ।।

ग्रासमुद्रां वामदोष्णा विकचोत्पलसन्निभाम् ।
प्रदर्शयन्दक्षिणेन प्राणादीनां च दर्शयेत् ।।

स्पृशेत्कनिष्ठोपकनिष्ठिके द्वे
    स्वाङ्गुष्ठमूर्ध्ना प्रथमेह मुद्रा ।
तथाऽपरा तर्जनिमध्यमे स्यात्
    अनामिकामध्यमिके च मध्या ।।

अनामिका तर्जनिमध्यमा स्या
    त्तद्वच्चतुर्थी सकनिष्ठिकास्ताः ।
स्यात्पञ्चमी तद्वदिति प्रदिष्टा
    प्राणादि मुद्रा निजमन्त्रयुक्ताः ।।

प्राणापान-व्यानोदान-
    समानाः क्रमाच्चतुर्थ्या युक्ताः ।

ताराधारा अपि वध्वन्ताः
कृष्णाध्वन एव ते मनवः ।।

ततो निवेद्य मुद्रिकां प्रधानया करद्वये
स्पृशन्ननामिकां निजं मनुं जपन्प्रदर्शयेत् ।। इति ।।

दत्वा पुष्पाञ्जलिं इत्यादि नैवेद्यविधिग्रन्थानामयमर्थः ।।

तत्र, पुष्परसमिति मधु । प्रथमं स्वर्णपात्रे दुग्धहविरादि युक्तं द्रव्यं निधाय, तत्सुदर्शनमन्त्रेण जलेन संप्रोक्ष्य, तत्सुदर्शनमुद्रया उपरि न्यासविधाने वक्ष्यमाणया अभिरक्ष्य, यं यं इति वायुबीजयुक्तेन तोयेन प्रोक्ष्य, तदन्नं परिशोष्य, पुनरग्निबीजेन रं रं इत्यनेन दोष्णा तत्संदह्य, वं वं इति सुधाबीजयुतेन वामदोष्णा स्पृष्ट्वा जप्त्वा, पुनर्मूलमन्त्रेण अष्टवारं दक्षिणेन स्पृष्ट्वा जप्त्वा, पुनस्सुरभिमुद्रां प्रदर्शयेत् । सुरभिमुद्राप्रकार उच्यते -

करयोरङ्गुलीस्सम्मुखमन्योन्य व्यत्यस्ताः कृत्वा, वामतर्जन्यग्रं दक्षिणमध्यमाग्रेण वलितमभिमुखं संयोज्य, दक्षिणतर्जन्या वाममध्यमामूलाग्रं सम्मुखं संयोज्य, वामानामिकाग्रेण वलितं दक्षिणकनिष्ठिकाग्रमभिमुखं संयोज्य, दक्षिणानामिकया वामकनिष्ठिकामामूलाग्रमभिमुखं योजयेत् । एषा सुरभिमुद्रा ।।

"अमृते अमेतोद्भवे अमृतेश्वरि अमृतवर्षिणि अमृतं स्रावय स्रावय स्वाहा" - इत्यनेन मन्त्रेण सुरभिमुद्रां प्रदर्श्य, तन्नैवेद्यं परिपूर्णं कृत्वा, पुनस्तन्नैवेद्यं अर्चयेत्, गन्धपुष्पाद्यैः । पुनर्हरिमपि पुष्पैः समभ्यर्च्य हरं वा, तत्तद्विषयानुसारेण पुनः उद्धृतपुष्पहस्तः मूलमन्त्रं स्वाहान्तमुच्चरन् तस्य देवस्य आस्यात्तेज आनीय निवेद्ये निक्षिपेत् । पुनः जलं दत्वा तद-मृतात्मकं हविरर्चयेत् । पुनर्दोर्युजा सगन्धाक्षतं कुसुममुद्धरन् इमं मन्त्रं जपन्, "निवेदयामि भवते जुषाणेदं हरिर्हरे" इति जपन् (निवेदयेत्) ।।

किरीटादि मन्त्राः क्रमेण लिख्यन्ते -

ओं नमो भगवते वासुदेवाय किरीटकेयूरहारमकरकुण्डलालङ्कृत शङ्खचक्रगदाब्जहस्त पीताम्बरधर श्रीवत्साङ्कितवक्षस्थल, श्रीभूमिसहित स्वात्मज्योतिर्द्वयदीप्तिकराय सहस्त्रादित्यतेजसे परमात्मने नमः । इति, किरीटमन्त्रः ।।

## ।। अथ पञ्चपुष्पाञ्जलिमन्त्राः ।।

१) ओं अं ओं रजोपाधये स्थूलविराट्शरीराय विश्ववैश्वानरात्मने सर्वजगत्स्त्रष्ट्रे ब्रह्मणे सरस्वतीसहिताय सर्वज्ञाय सदात्मने असङ्गाखण्डाद्वयापरोक्षसंविदे नमो नारायणाय नमः शिवाय परमात्मने नमः ।।

२) ओं उं ओं सत्वोपाधये सूक्ष्महिरण्यगर्भशरीराय तैजससूत्रात्मने सर्वजगत्पालकाय विष्णवे लक्ष्मीसहिताय सर्वज्ञाय चिदात्मने असङ्गाखण्डाद्वयापरोक्षसंविदे नमो नारायणाय नमः शिवाय परमात्मने नमः ।।

३) ओं मं ओं तमोपाधये सौषुप्ताज्ञानशरीराय प्राज्ञेश्वरात्मने सर्वजगत्संहर्त्रे रुद्राय उमासहिताय सर्वज्ञायानन्दात्मने असङ्गाखण्डाद्वयापरोक्षसंविदे नमो नारायणाय नमः शिवाय नमः ।।

४) ओं ओं ओं गुणत्रयोपाधये व्याकृताव्याकृतशरीराय प्रत्यग्ब्रह्मात्मने सर्वोत्पत्तिस्थितिसंहारकर्त्रे सर्वेश्वराय मूलप्रकृतिमायासहिताय सर्वज्ञाय सच्चिदानन्दात्मने असङ्गाखण्डाद्वयापरोक्षसंविदे नमो नारायणाय नमः शिवाय परमात्मने नमः ।।

५) निरवद्यनिर्गुणाशीर्यातीतशरीरायासङ्गप्रत्यगद्वयाय स्वभासावभासितकृत्स्नायासङ्गबोधाय सच्चिदानन्दात्मने असङ्गाखण्डाद्वयापरोक्ष संविदे स्वबोधध्वस्ताखिलानर्थव्रताय निरालम्बबिम्बायाहीनमहोदयाय नमो नारायाणाय नमः शिवाय परमात्मने नमः ।।

इत्येवं पञ्चपुष्पाञ्जलिमन्त्रः ।।

## ।। चुलुकोदमन्त्रास्तु ।।

इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतः जाग्रत्स्वप्नसुषुप्ति-अवस्थासु मनसा वाचा कर्मणा हस्ताभ्यां पद्भ्यामुदरेण शिश्ना यत्स्मृतं यदुक्तं यत्कृतं तत्सर्वं ब्रह्मार्पणं भवतु स्वाहा । मां मदीयं च सकलं अस्मत्स्वामिने हरये सम्यगर्पये । ओं तत् सत् ।। इति ।।

तत्र हरये इत्यत्र तत्तद्देवतानुसारेण योजनीयम् ।।

## ।। अथ वसन्तादि सूक्ष्मकालपरिज्ञानम् ।।

**आकर्षणं वसन्ते तु ग्रीष्मे स्तम्भनमुच्यते ।**
**वर्षर्तौ मोहनं प्रोक्तं वश्यं शरदि कथ्यते ।।**

**हेमन्ते मारणं चैव शिशिरोच्चाटनं भवेत् ।**
**घटिकापञ्चकं प्रोक्तं ऋतूनां क्रमतः शिवे ।।**

**रात्रावप्येवमेवोक्तं भागषट्कं यथाक्रमम् ।।**

अथ मातृकामन्त्रस्य प्रयोगविधिं वक्ष्ये -

**वर्गस्वरयाद्यंशा**
**क्रमेण कलधौतरजतताम्राः स्युः ।**
**इति रचितं रुचकमिदं**
**साधकसर्वार्थदायि सततं स्यात् ।।**

अस्यार्थः - वर्गस्वरयाद्यैशा इति । वर्गांशाः स्वरांश याद्यंशा इति । एतदुक्तं भवति - वर्गांश इत्यनेन कादिवर्गस्य सूर्यात्मकत्वात्

आदित्यांश इत्यर्थः । तेन द्वादशकलात्मकत्वात् सूर्यस्य द्वादशांशं सूर्यात्मकं हिरण्यमुक्तम् । स्वरांशस्य चान्द्रमसत्वात् चन्द्रमसः षोडश-कलात्मकत्वात् षोडशांशं चन्द्रात्मकरजतमुक्तम् । यादिवर्गस्य वन्ह्यात्म-कत्वात् वह्नेर्दशकलात्मकत्वात् दशांशं वह्न्यात्मकं ताम्रमुक्तम् । तत्र पणस्य षोडशांशमंश इत्युच्यते । एवं द्वादशांशं हिरण्यं षोडशांशं रजतं दशांशं ताम्रं च एकीकृत्य रचिताङ्गुलीयकमभिषेककलशेषु निधापनमङ्गुलीषु धारणं च उक्तफलदायीति ।

प्रयोगानन्तरम् -

**त्रिवारमम्भः परिजप्तमेतया**
**पिबेद्दिनादावपि विद्ययासुधीः ।**
**अनेन मूकोऽपि कवित्वगर्वितः**
**परां च कीर्तिं लभतेऽर्कमासतः ।। इति ।।**

तया मातृकया इत्यर्थः ।।

## ।। अथ अस्त्रोपदेशः ।।

स्वयं देवताविग्रहो भूत्वा लिपिपद्मे जलमादाय "ऐं क्लीं सौः अं वद वद वाग्वादिनी स्वाहा आं सौः क्लीं ऐं" - एवं एकैकवर्णवृद्ध्या अकारादि क्षकारान्तं सबिन्दुकं जप्त्वा, क्षकाराद्यकारान्तं विसर्गान्तं जप्त्वा सबिन्दुविसर्गं आदिक्षान्तं जप्तवा पिबन्, बडवाकारकुक्षावष्टदलपत्रेषु वर्णानां दीपशिखादीप्तिं ध्यायन् त्रिवारं दिनशः संवत्सरपर्यन्तं पिबेदित्यर्थः ।।

प्रयोगानन्तरम् -

**कमलोद्भवौषधिरसे वचया पयसा च पक्वमथ सर्पिरपि ।**
**अयुताभिजप्तमनुना दिनशो लिहतां कविर्भवति वत्सरतः ।।**

कम्भलोद्भवौषिधिः ब्राह्मी । वचा वेखण्ड ।।

अस्यार्थः - ब्राह्मीरसे स्वसमानं क्षीरं च सर्पिश्च स्वतुर्थांशां वचां च निष्पीड्य, त्रिभिर्दिनैः क्वथनपाकसिद्धं सर्पिरनया मातृकया अयुत-सङ्ख्यमभिजप्तं प्रतिदिनं मात्रया, लिहतां संवत्सरात् कवित्वसिद्धिः ।। प्रयोगानन्तरम् -

**वर्णौषध्या श्रिताभिः कलशममलधीरद्भिरापूरयित्वा**
**प्रातस्तेनाभिषिञ्चेत् दशशतपरिजप्तेन यं वापि मासम् ।**
**सः स्यान्मेधेन्दिरायुःप्रशमकवियशोविश्वसंवादयुक्तो**
**नारी वन्ध्यापि नानागुणगणनिलयं पुत्रवर्यं प्रसूते ।।**

अस्यार्थः - पञ्चाशद्वर्णौषधिभिः क्वथितकषायजलेन वा केवलं निष्पीड्य तद्रसेन वा कलशमापूर्य मातृकाविधानेन संपूज्य सहस्रसंङ्ख्यं मातृकां जप्त्वा, तेन कलशेन दिनशो मासपर्यन्तं यं कंचित् पुरुषमभिषिञ्चेत् स उक्तफलवान् स्यात् । नारी चेत् साप्युक्तफलवती स्यात् ।।

अथ वर्णौषिधीनां नामान्युच्यन्ते -

**चन्दन-कुचन्दना-गरु कर्पूरो-शरी-सेग-जल-घृसृणाः ।**
**तक्कोल-जाति-मांसी मुर-चोर-ग्रन्थि-रोचना-पत्राः ।।**

**पिप्पल-बिल्व-गुहारुण तृणक-लवङ्गाह्व-कुम्भि-वन्दिन्यः ।**
**सोदुम्बरिकाश्मरिकास्थिराब्ज-दरपुष्पिका-मयूरशिखाः ।।**

**प्लक्षाग्निमन्थ-सिह्मी कुशाह्व-दर्भाश्च-कृष्णदरपुष्पी ।**
**रोहिण-डुण्डुक-बृहती पाटलि-चित्रा-तुलस्यपामार्गाः ।।**

**शतमखलता द्विरेफौ विष्णुक्रान्ती-मुसल्यथाञ्जलिनी ।**
**दूर्वा-श्रीदेवि-सहे तथैव लक्ष्मीसदाभद्रे ।।?**

**आदीनामिति कथिता वर्णानां क्रमवशादथौषधयः ।**
**गुलिका कषाय भसित प्रभेदतो निखिलसिद्धिदायिन्यः ।।**

एतासामोषधीनां नामानि तत्तद्देशभाषया गुरुमुखादेव श्रोतव्यानि ।

तथाप्यत्रात्यन्ताप्रसिद्धानां नामानि लोकप्रसिद्धपर्यायनाम्नोच्यन्ते -

तत्र, कुचन्दनं रक्तचन्दनम् । उशीरं-प्रसारिणी । रोगः-कुष्ठं । जलं - हबेरं । घुसृणं - कुङ्कुमम् । ग्रन्थीति ग्रन्थपर्णी । रोचनेति - गोरोचना । पत्रेति तमालपत्रं । पिप्पलोऽश्वत्थः । रोहिणः वटः । चित्रेति वह्निः । कोडिवेली ।। द्विरेफः मधुपाख्यः । मुसलीति वाराही नीलप्यनाख्यः । सिह्मी रिंगणी । तत्र आदिनामिति अकारादीनाम इत्यर्थः । तत्र ककारषकारयोः प्रागेव कथितौषधत्वात् क्षकारे पृथक् नाङ्गीकृतः । एतदुक्तं भवति । उपर्यस्मिन् ये ये मन्त्रा उपदिष्टाः (उपदेक्ष्यमाणाः) तेषां तेषां तत्तद्वर्णौषधानि तत्तदक्षरसङ्ख्यामानेन संगृह्य गुळिका-कषाय-भसितभेदैः अभिषेकधारणादीनि कुर्यात् ।

अथ एतासामेव वर्णौषधीनां नामानि स्वरूपेणापि लिख्यन्ते -

चन्दनमिति-शुद्धचन्दनम् । कुचन्दनमिति-रक्तचन्दनम् । अगरु इति कृष्णागरु । कर्पूरमिति कापूर । उशीरमिति वाळा । रोग इति कोष्टम् । जलमिति-कालावाळा । घुसृणमिति कुङ्कुमकेसरम् । तक्कोलमिति तक्कोलपि । जातिरिति जायफल । मांसीति जटामांसी । मुरमिति दवना । मुरमिति मुरसंज्ञमेव वा । चोर इति अम्बे हळेदे । ग्रन्थीति पिप्पलमूल । रोचनेति गोरोचनम् । पत्रेति पाची । पिप्पलमिति अश्वत्थम् । बिल्वमिति तत्संज्ञमेव । गुहारुणेति वटिपिशिन् ।

तृणकर्भिति कावाटंपिल्लु । लवंग इति लवंगा । कुम्भिवन्दिनीति अनेवणके । सोदुम्बरेति उदुम्बर । काश्मरीति-शिरुकुमुलु । स्थिराब्जं इति . दोरदलताभरे । दरपुष्पीति शम्बङ्गीपू । मयूरशिखेति तत्संज्ञमूलिकाविशेषः । प्लक्ष इति इचिल् । आग्निमन्थति मुन्ने । सिंहेति कण्डंकत्तिरी । कुशेति कुशदर्भ । कृष्णादरपुष्पेति करुकाकणंपू । रोहिणमिति वट । डुंडुकर्मिति वाघै । बृहती डोली । पाटलीति पादरी । चित्रेति कोडिवेली अथवा एरण्डपत्रम् । तुलसीति प्रसिद्ध तुलसी । अपमार्गर्मिति अघाडा । शतमखलतेति मोडकीत्तान् । द्विरेफेति करुशारंकिन्नी (करिशलांकण्णि) । विष्णुक्रान्तीति तत्संज्ञमेव । मुसलेति नेलयन्नै । अंजलिनीति वरलगुचुंडिल् । दूर्वेति दूर्वा । श्रीदेवीति श्रीद्वियार् शांकलनीर् । सह इति येलताणिपूंडु । लक्ष्मीति नेलतालि । सद्राभद्रेति शिरुपिल्ले ।।

।। इति श्रीमहाराजतुलजेन्द्रविरचिते मन्त्रशास्त्रसङ्ग्रहे उपोद्घातप्रकरणं नाग प्रथमोऽध्यायः ।।



## ।। द्वितीयोऽध्यायः ।।

### ।। अथ श्रीमहागणपतिविधानमुच्यते ।।

गणक ऋषिः । निचृद्गायत्री छन्दः । श्रीमहागणपतिर्देवता । गं बीजं ह्रीं शक्तिः ।

ओं श्रीं ह्रीं क्लीं ग्लौं गं गां हृत् । ओं श्रीं ह्रीं क्लीं ग्लौं गं गीं शिरः । इत्याद्यङ्गानि ।।

मन्दाराद्यैः कल्पक-
वृक्ष-विशेषै-र्विशिष्टतर-फलदैः ।
शिशिरित-चतुराशे
ऽन्तर्बालातप-चन्द्रिकाकुले च तले ।।

ऐक्षव-जलनिधि-लहरी
कण-जालकवाहिना च गन्धवहेन ।
संसेविते च सुरतरु-
सुमनःश्रित-मधुप-पक्षचलनपरेण ।।

रत्नमये मणि-वज्र
प्रवालफलपुष्पपल्लवस्य सतः ।
महतोऽधस्तादृतुभिः
युगपत्संसेवितस्य कल्पतरोः ।।

सिह्ममुखपादपीठग
लिपिमयपद्मे त्रिषट्ककोणोल्लसिते ।
आसीनस्त्वेकरदो
बृहदुदरो दशभुजोऽरुणो गजवदनः ।।

इत्यासनध्यानम् -

तत्र, लिपिमयपद्मेत्यादीनामयमर्थः - त्रिकोणमध्ये प्रणवे 'गं' इति साध्यादि युतं लिखित्वा, 'श्रीं ह्रीं क्लीं ग्लौं' इत्येभिः त संवेष्ट्य, षट्कोणेषु बीजषट्कं तदन्तरालेषु अङ्गषट्कं, अष्टदलेषु मन्त्रपदाष्टकं तद्बहिः वृत्तत्रये मातृकया पाशाङ्कुशेन च संवेष्ट्य, तद्बहिः, भूपुरद्वये 'आं ह्रीं' इति कोणेषु दिग्विदिग्भेदेन विलिखेत् ।। इति ।।

ओं श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वर वरद सर्वजनं मे वशमानय स्वाहा । (इति मन्त्रः)

अष्टाविंशतिसहस्रजपः । अष्टद्रव्यैः[1] दशांशं पुरश्चरणहोमे ।।

## अथ श्रीमरागणपतिमन्त्रप्रसङ्गात् प्रासादविधानमुच्यते

मनः प्रसादप्रदत्वात् प्रासादसंज्ञा ।

वामदेव ऋषिः । पङ्क्तिः छन्दः । ईशो देवता ।।

ह्रां ह्रीं ह्रूं ह्रैं ह्रौं ह्रः - इति अङ्गानि ।।

ध्यानम् -

**शूलाहि-टंक-घण्टासि-सृणि-कुलिश-पाशाग्न्यभीति-र्दधानं**
**दोर्भिःशीतांशुखण्ड-प्रतिवटित-जटाभारमौलिं त्रिणेत्रम् ।**
**नानाकल्पाभिरामापधनमभिमतार्थप्रदं सुप्रन्नं**
**पद्मस्थं पञ्चवक्त्रं स्फटिकमणिनिभं पार्वतीशं नमामि ।।**

---

तदुक्तं च - मोदक-पृथुक-सलाजाः ससक्तवश्च-इक्षु-नारिकेल-तिलाः । कदलीफलसहितानित्यष्ट द्रव्याणि संप्रदिष्टानि ।। इति ।।

(प्रपञ्चसारे षोडशे पटले)

- हौं इति मन्त्रः ।। हकार चतुर्दशस्वर बिन्दुभिरयं मन्त्रः ।।एकादशलक्षं जपेत् । मधुरत्रयाप्लुतैः करवीरपुष्पैर्वा जपाकुसुमैर्वा कमलैर्वा धवलपायसेन वा नृपवृक्षसमिदि्भर्वा दशांशं होमः । (धवलपायसमिति क्षीरपायसं) करवीरं-कन्नेरी । जपा दासुंदपुष्पम् । नृपवृक्षं कोन्नै ।

अथ न्यासः -

हों ईशानाय नमः । हीं तत्पुरुषाय नमः । हुं अघोराय नमः । हिं वामदेवाय नमः । हं सद्योजाताय नमः । इति अङ्गुलीष्वंगुष्ठादिषु विन्यसेत् । पुनः एतैरुक्तैः पञ्चभिर्मन्त्रैः मूर्धाननहृद्गुह्यकपोलेषु च न्यसेत् । पुनरेतैः पञ्चभिर्मन्त्रैः उर्ध्वप्राक्दक्षिणोदक्पश्चिमदिक्स्थेषु मुखेषु न्यसेत् ।

**अष्टपत्र-गुणवृत्त-राशिभि-**
**र्वीथि-कल्पतरुभिः समावृतम् ।**
**मण्डलं प्रतिविधाय शूलिनः**
**पीठमत्र नवशक्तिभिर्यजेत् ।।**

अस्यार्थः - प्रथमं अष्टपत्रपद्मं विलिख्य, तद्बहिः वृत्तत्रयं विलिख्य तद्बहिः द्वादशराशिखण्डं विलिख्य, तद्बहिः चतुरस्त्रद्वयं विलिख्य, तच्चतुरस्त्रयोरन्तरालं वीथि संज्ञं भवति । तस्यां वीथ्यां कृताकृत्या(?) विलिखेत् ।। तत् कल्पतरुसंज्ञं भवति । अष्टदलकर्णिकामध्ये प्रासादबीजं विलिख्य, अष्टदलमूलेषु स्वरद्वन्द्वं विलिख्य, दलमध्ये, 'ओं ह्रीं हौं नमः शिवाय' इति शैवाष्टक्षरं विलिख्य, सर्वतो वहिः कादिवर्णैः आवेष्ट्य, तद्बहिः चतुरस्त्रकोणेषु प्रासादबीजं विलिखेत् ।। इत्येवं शैवपीठं विलिख्य, तस्मिन् नवशक्तिभिर्यजेत् ।।

वामायै । ज्येष्ठायै । रौद्र्यै । काल्यै । कलविकरिण्यै । बलविकरिण्यै । बलप्रमथिन्यै । सर्वभूतदमन्यै । मनोन्मनायै इति, अष्टदलेषु अष्टशक्तिः, नवमीं कर्णिकायां च समभ्यर्च्य, 'ओं नमो भगवते

सकलगुणात्मशक्तियुक्ताय अनन्ताय 'योगपीठात्मने नमः' इति, कर्णिकायां समभ्यर्च्य, तस्मिन् पीठे ईशमूर्तिं समावाह्य समर्चयेत् । प्रथमं, तत्पुरुषाय नमः । अघोरेभ्यो नमः । सद्योजाताय नमः । वामदेवाय नमः । एता मूर्तयः चतुसृषु पूर्वपश्चिमोत्तरदक्षिणदिक्षु ईशान्ये च[1] ।

निवृत्यै । प्रतिष्ठायै । विद्यायै । शान्त्यै । इति विदिक्षु समर्चनीयाः ।। शान्त्यतीतायै नमः इति ईशान्यै ।।

।। इति प्रथमावृतिः ।।

एतासां मूर्तीनां रोचींष्युच्यन्ते

**सद्यो वेदाक्षमालाभयवरदकरः कुन्दमन्दारगौरो**
**वामः काश्मीरवर्णोऽभयवरदकरश्चाक्षमालाविलासी ।**
**अक्षस्रग्वेदपाशाङ्कुश-डमरुक-खट्वाङ्ग शूला(लं)न्कपालं**
**ब्रिभ्राणो भीमदंष्ट्रोऽञ्जनरुचिरतनु-र्भीतिदश्चाप्यघोरः ।।**

**विद्युद्वर्णोऽथ वैदाभय-वरद-कुठारान् दधन्(त्)पुरुषाख्यः**
**प्रोक्तास्सर्वे त्रिणेत्रा विधृतमुखचतुष्काश्चतुर्बाहवश्च ।**
**मुक्तागौरोऽभयेष्टाधिक-करकमलो घोरतः पञ्चवक्त्र-**
**स्त्वीशो ध्येयोऽम्बुजन्मोद्भव-मुररिपु-रुद्रेश्वरास्स्युः शिवान्ताः ।।**

**भूतानां शक्तित्वाद्व्यापित्वाज्जगति या निवृत्त्याद्याः ।**
**तेजोरूपाः करपदवर्णविहीना मंनीषिभिः प्रोक्ताः ।।**

पुनः, आङ्गैः द्वितीयावृतिः ।।

अनन्ताय नमः । सूक्ष्माय नमः । शिवोत्तमाय नमः । एकनेत्रे नमः । एकरुद्राय नमः । त्रिमूर्तये नमः । श्रीकण्ठाय नमः । शिखण्डिने नमः ।

इति तृतीयावृतिः

---

1. पूर्वदक्षिणपश्चमोत्तरदिक्षु मध्ये च इत्येव भाव्यम् ।।

एतेषां आयुधरोचींषि तु -

**शूलाशनिशरचापोल्लसितसुदोर्दण्डभीषणास्सर्वे ।**
**पद्मासनश्च नानाविधभूषणभूषितास्त्रिणेत्राः स्युः ।।**

**पाटलपीतसितारुण शीतिप्रभाश्च धूम्रान्ताः ।**
**कोटिरकोटिविलसच्छशिशकलयुताश्च मूर्तयः क्रमश ।।** इति

पुनः - उमायै । चण्डेश्वराय । नन्दिने । महाकालाय । गणेश्वराय । वृषाय । भृङ्गिरिटये (?) । स्कन्दाय । तत्र उत्तरादिक्षुक्रमेण उमादयः संपूज्याः ।।

इति चतुर्थ्यावृतिः ।।

**कनकवैडूर्य-विद्रुम-मरकत-मुक्तासिताश्च रक्ताभाः ।**
**पद्मासनसंस्थाश्च क्रमादमाद्या गुहान्तिकाः प्रोक्ताः ।।**

पुनः इन्द्रादिभिः पञ्चमी । वज्रादिभिः षष्ठी ।

**अथ प्रासादविधानमन्त्रप्रसङ्गात् प्रसिद्धं**

**पञ्चाक्षरीविधानं उच्यते -**

वामदेव ऋषिः । पङ्क्तिः छन्दः । सदाशिवो देवता । अं बीजम् । आं शक्तिः ।।

ओं हृत् । नं शिरः । मं शिखा । शिं कवचम् । वां नेत्रत्रयम् । यं अस्त्रम् ।।

अथवा, शास्त्रान्तरोक्तप्रकारेण एवं उच्यते -

ओं ओं सर्वज्ञशक्तिधाम्ने हृत् । ओं नं नित्यतृप्तिशक्तिधाम्ने शिरः । ओं मं अनादिबोधशक्तिधाम्ने शिखा । ओं शिं स्वतन्त्रशक्तिधाम्ने

कवचम् । ओं वां अलुप्तशक्तिधाम्ने नेत्रत्रयम् । ओं यं अनन्तशक्तिधाम्ने अस्त्रम् । इदं त्वङ्गं पञ्चाक्षरस्य शास्त्रान्तरोक्तप्रकारम् ।। एतद्वा कुर्यात् ।।

पुनः - तत्पुरुषाय नमः । अघोरेभ्यो नमः । सद्योजाताय नमः । वामदेवाय नमः । ईशानाय नमः । एतान् पञ्चमन्त्रान् तर्जनीमध्यमानामिका-कनिष्ठिकाङ्कुष्ठेष्वङ्गुलीषि विन्यसेत् । पुनः एतान् वक्त्रहृत्पादगुह्यमूर्धस्वपि च न्यसेत् । पुनः एतैरेव मन्त्रैः प्राच्ययाम्यवारिणोदिच्यवक्त्रेषु मूर्धसु च न्यसेत् ।

पुनः, ध्यानम् -

**बिभ्रद्दोर्भिः कुठारं मृगमभयवरौ सुप्रसन्नो भवेशः**
**सर्वालङ्कारदीप्तः सरसिजनिलयो व्याघ्रचर्मात्तवासाः ।**
**ध्येयो मुक्तपरागामृतरसघटिताद्रिप्रभः[1] पञ्चवक्त्रः**
**त्र्यक्षः कोटीरकोटीघटिततुहिनरोचिष्कलोत्तुङ्गमौलिः ।।**

ओं नमःशिवायः इति मन्त्रः । मोक्षप्रधानोऽयं मन्त्रः । विंशतिलक्षजपः । शुद्धैस्तिलैर्वा घृतैर्वा दुग्धान्नैर्वा क्षीरद्रुमसमिद्भिर्वा विंशतिसहस्रं जुहुयात्, पुरश्चरणार्थम् ।।

अथ पूजा -

अत्रैव प्राक् प्रासादोक्ते पीठे समावाह्य समर्चयेत् ।

तत्पुरुषाय नमः । अघोराय नमः । सद्योजाताय नमः । वामदेवाय नमः । ईशानाय नमः ।।

तत्पुरुषादि मूर्तीनां आयुधवर्णादयस्तु -

**तत्पुरुषाद्यास्सर्वे प्रधान(?)संप्रोक्तबाहुहेतियुताः ।**
**उल्लसितमुखचतुष्कास्तेजोरूपा विलक्षणस्त्वीशः ।। इति ।।**

---

1. कलिताद्रिप्रभः इत्यपि पाठः ।

एताभिः मूर्तिभिः सशक्तिकाभिः प्रसादोक्तवत् प्रथमावृतिः । अङ्गैः द्वितीयावृतिः । पुनः पूर्वं प्रासादोक्तैः अनन्तादिभिः तृतीयावृतिः । पुनः, तत्रैवोक्तैः उमादिभिः चतुर्थी । इन्द्रादिभिः पञ्चमी । वज्रादिभिः षष्ठी ।

**अस्यैव पूजाविधानान्तरं उच्यते -**

पूर्वं प्रासादोक्तपीठं स्वहृदये विन्यस्य, तस्मिन् पीठे मूलमन्त्रैरावाह्य पूर्वोक्ताङ्गान्यपि विन्यस्य, मूलमन्त्रवर्णान् विन्यसेत् । तत्कथम् -

**हृन्मुखांसोरुयुग्मेषु षड्वर्णान्क्रमशो न्यसेत् ।**
**कण्ठमूले तथा नाभौ पार्श्वयुक्पृष्ठहृत्सु च ।।**

**मूर्धास्यनेत्रघ्राणेषु दोःपत्सन्ध्यग्रकेषु च ।**
**सशिरो-वक्त्र-हृदय-जठरोरुपदेष्वपि ।।**

**हृदाननपरश्वैणाभीत्याख्यवरदेषु च ।**
**मुखांसहृदयेषु त्रीन् पदान्पादोरुकुक्षिषु ।।**

**ऊर्ध्वाधः क्रमतः कुर्याद्गोलकान्यासमुत्तमम् ।।**

एवं षड्वर्णैः दशकृत्वो न्यसेत् ।

तत्र, दोर्मूलसन्ध्यङ्गुलिमूलमध्याग्रेषु पादमूलजानुसन्धिपार्ष्ण्यङ्गुलि-मूलाग्रेषु षट्सु स्थानेषु विनियोगः । ऊर्ध्वाधः क्रमत इति गोलकोवत् (?) । ऊर्ध्वक्रमतश्च अधःक्रमतश्च त्रीणि त्रीण्यक्षराणि न्यसेत् ।

पुनः, तत्पुरुषाघोरवामदेवसद्योजातेशसंज्ञकान् पञ्चमन्त्रान् ललाट-द्व्यसंजठरहृदयेषु क्रमान्न्यसेत् ।।

पुनः इमं मन्त्रं जपेत् -

नमोऽस्तु स्थाणुभूताय ज्योतिर्लिङ्गामृतात्मने ।
चतुर्मूर्तिवपुश्छायाभासिताङ्गाय शम्भवे ।।

पुनः, अनेनैव मन्त्रेण निजदेहे पुष्पाञ्जलिं कुर्यात् त्रिवारं पञ्चवारं वा । एवं मानसपूजां कृत्वा बाह्यपूजां आरभेत ।।

पूर्वोक्तशैवपीठे समावाह्य पञ्चाक्षरमूर्तिं समर्चयेत् । अङ्गैः प्रथमावृतिः ।

तत्पुरुषाय नमः । अघोराय । सद्योजाताय । वामदेवाय । ईशानाय ।। निवृत्यै । प्रतिष्ठायै । विद्यायै । शान्त्यै । शान्त्यतीतायै ।। इति ।। तत्र, मूर्तयो दिक्षु, ईशान्ये ईशानः । शक्तयो विदिक्षु ऐशान्ये च ।। इति द्वितीयावृतिः ।।

वृषाय । क्षेत्रपालाय । चण्डेश्वराय । दुर्गायै । गुहाय । नन्दिने । गणपाय । सैन्यपाय । इति तृतीयावृतिः । इन्द्रादिभि चतुर्थी । (आवृतिः)

एवं सम्पूज्य अनेनस्तोत्रेण स्तोतव्यो महेश्वरः -

नमो विरिञ्चिविष्ण्वीशभेदेन परमात्मने ।
सर्गसंस्थितिसंहारव्यावृत्तिव्यस्तमूर्तये ।।

नभश्चतुर्धा प्रोद्भूतभूतभीतात्मने नमः ।
भूरिभारार्तिसंहर्त्रे भूतनाथाय शूलिने ।।

विश्वग्रासाय विलसत्कालकूटविषाशिने ।
तत्कलङ्काङ्कितग्रीव-नीलकण्ठाय ते नमः ।।

नमो ललाटनयनप्रोल्लसत्कृष्णवर्त्मने ।
ध्वस्तस्मरनिरस्ताधि-योगिध्येयाय शम्भवे ।
नमो देहार्धकान्ताय दग्धदक्षाध्वराय च ।।

चतुर्वर्गेष्वभीष्टार्थदायिने मायिनेऽणवे ।
स्थूलाय मूलभूताय शूलदारितविद्विषे ।।

कालहन्त्रे नमश्चन्द्रखण्डमण्डितमौलये ।
विवाससे कपर्दान्तर्भ्रान्ताह्निसरिदिन्दवे ।।

देवदैत्यासुरेन्द्राणां मौलिघृष्टाङ्घ्रये नमः ।
भस्माभ्यक्ताय भक्तानां भुक्तिमुक्तिप्रदायिने ।।

व्यक्ताव्यक्तस्वरूपाय शङ्कराय च ते नमः ।

नमो अन्धकान्तकरिपवे पुरद्विषे
नमोऽस्तु ते द्विरदव(रा)हभेदिने ।
विषोल्लसत्फणिकुलबन्धमूर्तये
नमः सदा वृषवरवाहनाय ते ।।

वियन्मरुद्धुतवहवार्वसुन्धरा-
मखेशरव्यमृतमयूखमूर्तये ।
नमःसदा नरकभयार्तिभेदिने
भवेह नो भवभयभङ्गकृद्विभो ।।

एवं स्तुत्वा पुनरुद्वासयेत् स्वहृदयाम्बुजे । पुनरपि देहं समर्च्य यथाशक्ति जपेत् ।।



।। अथ शैवपूजाविधानप्रसङ्गात् पार्थिवलिङ्गपूजाविधिः ।।

मृदाहरणसङ्घट्टप्रतिष्ठाह्वानकर्म च ।
स्नपनं पूजनं चाथ विसर्जनमतः परम् ।।

हरो महेश्वरश्चैव शूलपाणिः पिनाकधृक् ।
पशोः पतिःशिवश्चैव महादेवेति नामभिः ।।

हरेत्यादि सप्तभिर्नामभिः मृदाहरणादि सप्तकर्म कुर्यात् ।।

अथ अस्य पञ्चाक्षरस्य प्रयोगाः मन्त्रदेवताप्रकाशिकोक्तप्रकारेण लिख्यन्ते -

आरुह्य पर्वतं पुण्यं जपेल्लक्षमतन्द्रितः ।
लक्षद्वयं महानद्यां महदायुष्यमाप्नुयात् ।।

दूर्वाङ्कुरैस्तिलैर्वापि गलूचीशकलैस्तथा ।
होमात्तु दशसाहस्रं जायते चिरजीवितम् ।।

आदित्याभिमुखो भूत्वा जपेल्लक्षमनन्यधीः ।
अग्नावष्टशतं नित्यं जुहुयाद् व्याधिशान्तये ।।

समस्तव्याधिशान्त्यर्थं जुहुयादयुतं नरः ।
पलाशसमिधो वह्नौ नीरोगी मनुजो भवेत् ।।

शनैश्चरदिनेऽश्वत्थं स्पृशन्नष्टोत्तरं शतम् ।
शनैश्चरकृता पीडा जपतो नश्यतेऽखिला ।।

नित्यमष्टशतं जप्त्वा पिबेत्पाथोऽर्कसन्निधौ ।
औदर्यैस्तु महारोगैः मासेनैकेन मुच्यते ।।

स्पृष्ट्वैकादशसाहस्रं जपन्नन्नं जलं तु वा ।
आरोग्यं तत्क्षणात्तस्य विषमप्यमृतं भवेत् ।।

चन्द्रसूर्यग्रहे पूर्वमुपोष्य विधिना शुचिः ।
यावद्ग्रहणमोक्षं तु तावन्नद्यां समाहितः ।।

जपेत्समुद्रगामिन्यां पिबेत्तन्मन्त्रितं तु वा ।
अष्टोत्तरकहस्रेण पिबेद्ब्राह्मीरसं द्विजः ।।

महासारस्वतं तेन सर्वशास्त्रप्रकाशितम् ।
चन्द्रसूर्यग्रहे लिङ्गं समभ्यर्च्य यथाविधि ।।

यत्किञ्चित्प्रार्थयेद्देवं जपेदयुतमादरात् ।
सर्वान्कामानवाप्नोति पुरुषो नात्र संशयः ।।

अथ अस्य यन्त्रमपि मन्त्रदेवताप्रकाशिकोक्तप्रकारेण लिख्यते -

तत्रादौ षट्कोणमण्डलं लिखित्वा, तदन्तः साध्यनामयुक्तं प्रासादबीजं विलिख्य, षट्कोणेषु प्रणवसहितान् पञ्चाक्षरवर्णान्, कोणविवरेषु षडङ्गमन्त्रान् विलिख्य, तद्बहिः पञ्चदलानि विलिख्य, तद्दलेषु ईशानादि पञ्चब्रह्मनामानि प्रागादिक्रमेण चतुर्थीनमोऽन्तानि विलिखेत् । तद्बहिः अष्टदलानि रचयित्वा, तद्दलेषु मातृकाष्टवर्गान्, कादिपञ्चकं, यादित्रितयं, इत्येवं विलिख्य, तद्बहिर्वृत्ते त्र्यम्बकेन वेष्टयेत् । एतद्यन्त्रं जपहोमसाधितं धारयतः आयुरारोग्यैश्वर्य-सर्वसंपत्सर्व- रक्षाभुक्तिमुक्तिफलानि भवन्ति ।।

## अथ पञ्चाक्षरादिमन्त्रप्रसङ्गात् चिदम्बरपञ्चाक्षरमन्त्रोऽपि लिख्यते ।।

सदाशिव ऋषिः । महाविराट् छन्दः । चिदम्बरनटेशो देवता ।

ह्रीं हृत् । शिवाय नमः शिरः । मशिवायन शिखा । नमःशिवाय कवचम् । यनमशिवा नेत्रम् । वायनमशि अस्त्रम् ।।

ध्यानम् -

**प्रथमं वह्निहस्तं च द्वितीयं चरणौ (हरिणं) तथा ।**
**तृतीयं लम्बहस्तं च चतुर्थं डमरुं स्मरेत् ।।**
**अभयं पञ्चमं चैव ताण्डवं भावयेत्सुधीः ।।**

एवं क्रमशः अक्षरानवयवेषु विनियुज्य भावयेदित्यर्थः ।

ओं क्रों श्रीं नमःशिवाय श्रीं ह्रीं ओं । इति मन्त्रः । मोक्षप्रधानोऽयं मन्त्रः । चतुर्दशसहस्रं वा लक्षं वा जपेत् ।।

अस्यैव ध्यानान्तरं -

**इदं कमलसुन्दरं सदसि काञ्चने नृत्यतः**
**सदञ्चितमुदञ्चितं किमपि कुञ्चितं चञ्चलम् ।**
**विचिन्तय चिदम्बरे हृदयसम्पदे शाश्वतं**
**विरिञ्चकरकन्दुकं चरणमिन्दुचूडामणेः ।।**

ध्यानान्तरम् -

**वामे हस्तेऽथ वह्निं नयुतमथ करे दक्षिणे शि(व)स्वरूपं[1]**
**शव्दब्रह्मैकनिष्ठं डमरुमभयदं यं वकारं च वामे ।**
**हस्ते श्रीदक्षिणेन स्वपदरसिजेनात्ममोहं म धाम्ना**
**चाक्रंयवस्थितं त्वां भजति ह निटिले निग्रहानुग्रहाभ्याम् ।।**

श्रीं ह्रीं नमः शिवाय इति द्वितीयमूलमन्त्रः ।।

---

1. चित्स्वरूपं इति मातृकान्तरे ।।

अथ ध्वनिमन्त्रः -

शिव शिव शरणं शिवानन्दं शिव शिव शिवाय शिवाय नमः । त्रयोविंशद्वर्णः ।

**भू(भ्रू)मध्य(ये)दीपवत्संस्थं ताण्डवं स्वस्य चिन्त्य तु ।**
**सदा जपेदिमं मन्त्रं ताण्डवं भावमाश्रितः ।।**

| | |
|---|---|
| शिवाय नमः | - आकर्षणाख्यमन्त्रः । |
| यनमशिवा | - इति स्तम्भनमन्त्रः । |
| मशिवायन | - इति मोहनमन्त्रः । |
| वायनमशि | - इति संहारमन्त्रः । |
| नमःशिवाय | - इति उच्चाटनमन्त्रः । |

आकर्षणाद्या मनवः लक्षमात्रेण सिद्धिदाः ।।

श्रीमत्ताण्डवचरणौ सदा शरणमहं प्रपद्ये । इति ताण्डवमन्त्रः ।।

| | |
|---|---|
| आकर्षणयन्त्रम् | - ठकारमध्ये 'शिनमयवा' इति विलिखेत् । |
| स्तम्भनयन्त्रम् | - चतुरस्रं विलिख्य, कोणेषु चतुर्षु लकारं विलिख्य, तन्मध्ये नकारं विलिखेत् । |
| मोहनयन्त्रम् | - अर्धचन्द्राकारं विलिख्य, तन्मध्ये मकारं विलिखेत् । |
| संहारयन्त्रम् | - त्रिकोणं विलिख्य, तन्मध्ये शिकारं विलिखेत् |
| उच्चाटनयन्त्रम् | - षट्कोणं विलिख्य तन्मध्ये वाय इत्यक्षरद्वयं विलिखेत् । |

एतानि यन्त्राणि तेन तेन मन्त्रेण जपेच्च ।।

मवायनशि - इति गोरक्षामन्त्रः

क्लीं एहि एहि जगच्चक्रं सर्वार्थं सर्वशोभितं सर्वैश्वर्य जगदाधारं अस्मिन् चक्रे प्रतिष्ठां कुरु कुरु स्वाहा ।। इति चक्रप्राणप्रतिष्ठा मन्त्रः ।।

अथ चिदम्बरसभानटमन्त्रः -

सदाशिव ऋषिः । नृचिद्गायत्री (निवृद्गायत्री) छन्दः । महादेवचिदम्बरसभानटो देवता । अं बीजं । उं शक्तिः । मं कीलकम् ।

ओं ह्रीं परंज्योतिः हंस हंस हृत् । व्योम व्योम्ना शक्तिः शिरः । शिवज्योतिरानन्दनर्त शिखा । परप्रकाशानन्दनाथ कवचम् । रक्तपादुकां[1] पूजयामि नेत्रम् । ह्रीं शिवायै नमः अस्त्रम् । अङ्गमन्त्र एव मूलमन्त्रः ।।

।। सप्तार्णवपरिक्षेप इत्यादि ध्यानम् ।।

**।। अथ चिदम्बरपञ्चाक्षरमन्त्राप्रसङ्गात् विषहरनीलकण्ठत्र्यक्षरीमन्त्रोऽपि लिख्यते ।।**

हर ऋषिः । अनुष्टुप् छन्दः । नीलकण्ठरुद्रो देवता । प्रों बीजं । ठः शक्तिः । त्रीं कीलकम् ।।

हर हर स्वाहा हृत् । कपर्दिने स्वाहा शिरः । नीलकण्ठाय स्वाहा शिखा । कालकूटविषभक्षणाय कवचम् । नीलकण्ठिने स्वाहा अस्त्रम् ।

ध्यानम् -

**बालार्कायुततेजसं धृतजटाजूटेन्दुखण्डोज्ज्वलं**
**नागेन्द्रैः कृतभूषणं जपवटीं शूलं कपालं करैः ।**
**खट्वाङ्गं दधतं त्रिणेत्रविलसत्पञ्चाननं सुन्दरं**
**व्याघ्रत्वक्परिधानमब्जनिलयं श्रीनिलकण्ठं भजे ।।**

ओं प्रों त्रीं ठः । इति मन्त्रः ।।

अथ नीलकण्ठमन्त्रप्रसङ्गात् रक्षाप्रधान आपदुद्धारणमन्त्रोऽपि शिवकिङ्करत्वेन मन्त्रदेवताप्रकाशिकोक्तप्रकारेण लिख्यते -

---

1. रत्नपादुकां इति ग्रन्थान्तरे ।।

बृहदारण्यक ऋषिः । अनुष्टुप् छन्दः । आपदुद्धारणो महावटुकभैरवो देवता ।

ह्रां वां हृत् । ह्रीं वीं शिरः । इत्याद्यङ्गानि[1] ।।

ह्रां वां बीजं । ह्रीं वीं शक्तिः । ह्रूं वूं कीलकम् ।।

भूतप्रेतपिशाचाद्युच्चाटनार्थे विनियोगः ।।

ध्यानम् -

**करकलितकपालः कुण्डली दण्डपाणिः**
**तरुणतिमिरनीलो व्यालयज्ञोपवीती ।**
**क्रतुसमयसपर्याविघ्नविच्छेदहेतुः**
**जयति वटुकनाथः सिद्धिदः साधकानाम् ।।**

ओं श्रीं ह्रीं क्लीं क्ष्म्र्यूं वटुकाय आपदुद्धरणाय कुरु कुरु वटुकाय ह्रीं ।। इति मन्त्रः पञ्चविंशतिवर्णः । तावल्लक्षं जपः । त्रिमधुरसिक्तैः तिलैः दशांशं पुरश्चरणहोमः ।।

अस्यैव यन्त्रमाह -

**श्रीमायास्मरकूटमत्र विलिखेन्मध्ये दलेष्वाष्टसु**
**द्विः प्रोक्तं वटुकायशब्दमपरान्मन्त्रास्य वर्णान् वहिः ।**
**अष्टद्वन्द्वदलेषु तद्बहिरथ तत्सङ्ख्यपत्रेष्वथो**
**द्वात्रिंशद्दलकादिसान्तसहितं यन्त्रां लिखेद्भूपुरे ।।**

अस्यार्थः -

प्रथमं अष्टपत्रपद्मं विलिख्य, तत्कर्णिकाया प्रणवं विलिख्य, तन्मध्ये 'श्री ह्रीं क्लीं क्ष्म्र्यूं' इति चतुसृषु दिक्षु विलिख्य, तन्मध्ये साध्यनामादीन् विलिखेत् । पुनः, अष्टदलेषु 'वटुकाय वटुकाय' इति द्विरुक्तपदस्यैकैकमक्षरं विलिखेत् । तद्बहिः षोडशदलपद्मं विलिख्य,

---

1. अङ्गन्यासः, विनियोगानन्तरमेव कर्तव्यः ।।

तेषु, 'आपदुद्धारणाय कुरु कुरु वटुकाय ह्रीं' एतान्वर्णानेकैकं विलिख्य, तद्बहिः षोडशदलेषु षोडशस्वरान्विलिख्य, तद्बहिः त्रिंशद्दलपद्मं विलिख्य, तेषु कादि सान्तान् एकैकमक्षरं विलिख्य, तद्बहिः चतुरस्त्रं विलिखेत् । एतद्यन्त्रं रक्षाकरं भवति ।।

**अथ पूजा -**

व्योमपद्माङ्कितत्रिकोणवृत्ताष्टदलचतुरस्त्रात्मकं चक्रं विलिख्य, 'श्रीं ह्रीं नमः' इत्युच्चार्य पुष्पाञ्जलीं विकीर्य तस्मिन्[1] (चक्रे) भैरवं मूलेन आवाह्य, मूलेन ईशानादि पञ्चमन्त्रैः च आवाहनादि मुद्राः प्रदर्श्य, देवतातनौ षडङ्गादीन्विन्यस्य, पाद्यादीन् अङ्गमन्त्रैः दत्वा, ईशानादि पञ्चमन्त्रैः ऊर्ध्वपूर्वादि पञ्चवक्त्रेषु अभ्यर्च्य, षडङ्गमन्त्रैः हृदयादिषु संपूज्य, परिवारान् अर्चयेत् ।। तद्यथा -

श्रीं ह्रीं ईशानाय वटुकभैरवाय वटुकेभ्यो ह्रीं श्रीं नमः ।

श्रीं ह्रीं वामदेव वटुकभैरवाय वटुकेभ्यो (ह्रीं श्रीं) नमः । इत्यादि पञ्चमन्त्रान् मध्याग्रदक्षिणोत्तरपश्चिमेषु ।।

कर्णिकायामेव प्रथमावरणम् ।

अग्नीशासुरवायुकोणेषु पुरतो दिक्षु च षडङ्गैः द्वितीयावरणम् ।

श्रीं ह्रीं असिताङ्गभैरवपादुकाभ्यो ह्रीं श्रीं नमः । एवमेव, रुरुभैरव चण्डभैरव, क्रोधभैरव, उन्मत्तभैरव, कपालिभैरव, भीषणभैरव, संहारभैरव इति । व्योमपद्माष्टदलेषु पूर्वादीशान्तं असिताङ्ग-भैरवाद्यष्टकेन, तृतीयावरणम् ।

व्योमपद्ममिति कर्णिकावृत्तविशिष्टपद्ममित्यर्थः ।

---

1. तदुक्तं विश्वसारोद्धारतन्त्रे - चतुरस्त्रासने पद्ममष्टपत्रं सकर्णिकम् । तस्य मध्ये च षट्कोणं मण्डलं तु विधीयते ।। तन्मध्ये च त्रिकोणं च तनमध्ये व्योमपङ्कंजम् । मध्ये वटुकमावाहयेत् ।। इति

श्रीं ह्रीं डीकिनीपुत्रपादुकाभ्यो ह्रीं श्रीं नमः । एवमेव, राकिंनी - लाकिनी-शाकिनी-हाकिनी-काकिनीः पूर्वादिषट्कोणेषु, डाकिनी पुत्रादि-षट्केन, चतुर्थावरणम् ।

तद्बहिः कर्णकावृते, 'श्रीं ह्रीं शाकिनीपुत्रपादुकाभ्यो ह्रीं श्रीं नमः' । इत्यादि, मालिनीपुत्र मन्त्रपुत्र उमापुत्र रुद्रपुत्र ऊर्ध्वमुखीपुत्र शक्तिपुत्र पादुकाभ्यो ह्रीं श्रीं नमः ।। इति, शकिन्यादि सप्तकं षट्कोणबाह्य-कर्णिकावृते ।।

ऐशान्याद्यग्निपर्यन्तं 'श्रीं ह्रीं गणपतिपादुकाभ्यो ह्रीं श्रीं नमः' । एवमेव, क्षेत्रपाल महाशास्तृ वटुकनाथ इति गणपत्यादिकुमारचतुष्कं तत्तत्कर्णिकावृते आग्नेयादि नैऋत्यान्तम् ।

श्रीं ह्रीं देवीपुत्रपादुकाभ्यो श्रीं ह्रीं नमः । इत्यादि मातृपुत्र, कुलपुत्र, एतत्स्थानाधिपति एतद्ग्रामाधिपति एतद्देशाधिपति इति देवीपुत्रादि षट्कं तत्कर्णिकावृत्ते नैऋत्यादि वायव्यान्तं -

श्रीं ह्रीं मेघनादपादुकाभ्यो नमः । इत्यादि प्रचण्डोग्र, कालदूत पुत्रत्रिकं तत्कर्णिकावृत्ते वायव्यादीशानान्तं - इति शाकिन्यादिबालसप्त-सहितं गणपत्यादिकुमारचतुष्कं देवीपुत्राद्यधिपतिषट्कं मेघनादादि-पुत्रत्रिकं इत्येतैः सर्वैः मिलित्वा विंशद्दे(तिदे)वताभिः पञ्चमावरणम् ।

**ततस्तद्बाह्ये** - श्रीं ह्रीं मङ्गलापुत्र पादुकाभ्यो हीं श्रीं नमः । एवमेव, चर्चिकापुत्र योगेशीपुत्र हरसिद्धादिपुत्र भट्टारीपुत्र कलिकिलापुत्र कालरात्रिपुत्र विभीषिकापुत्र इति, पूर्वाद्यष्टदलकेसरेषु मङ्गलापुत्राद्यष्टकेन षष्ठावरणम् ।

**ततस्तद्बाह्ये** - श्रीं ह्रीं ब्रह्माणीपुत्र पादुकाभ्यो हीं श्रीं नमः । एवमेव, माहेश्वरीपुत्र कौमारीपुत्र वैष्णवीपुत्र वाराहीपुत्र इन्द्राणीपुत्र चामुण्डापुत्र महालक्ष्मीपुत्र इति पुर्वाद्यष्टदलेषु ब्रह्माण्यादिमातृपुत्रैः सप्तमावरणम् ।

पुनस्तद्बाह्ये - श्रीं ह्रीं इन्द्रवटुकपादुकाभ्यो ह्रीं श्रीं नमः । इत्याब्रह्मवटुकान्तं चतुरस्राभ्यन्तरप्रकारे प्रागादि इन्द्रवटुकादि दशकेन[1] अष्टमावरणम् ।

पुनस्तद्बाह्ये - श्रीं ह्रीं हेतुकभैरवपादुकाभ्यो ह्रीं श्रीं नमः । इत्यादि त्रिपुरान्तभैरव अग्निभैरव वेतालभैरव अग्निजिह्वाभैरव करालभैरव कालभैरव भीमरूपभैरव अचलभैरव - श्रीं ह्रीं हाटकेश्वर-भैरवपादुकाभ्यो ह्रीं श्रीं नमः । इति, चतुरस्रस्य मध्यप्राकारे प्रागादि हेतुकादि दशकेन नवमावरणम् ।

श्रीं ह्रीं वज्रिणीपुत्र पादुकाभ्यो ह्रीं श्रीं नमः । इत्यादि पद्मिन्यन्तचतुरस्रस्य (प्राकारे) प्राग्वाह्यप्राकारे, लोकेशस्यायुधवज्रिणी-पुत्रदशकेन पूर्वादिदिक्षु दशमावरणम् ।।

एवं भैरवं संपूज्य बलिं दद्यात् ।

**शाल्यन्नं पलालं सर्पिर्लाजचूर्णानि शर्करा ।**
**गुलमिक्षुरसापूपौ मध्ववतैः परिमिश्रितैः ।।**

**कृत्वा कबलमाराध्य देवं प्रागुक्तवर्त्मना ।**
**रक्तचन्दनपुष्पाद्यैः निशि तस्मै बलिं हरेत् ।।**

ततस्सिद्ध्यन्ति कार्याणि बलिनाऽनेन मन्त्रिणाम् । तत्र पललमिति तिलम् ।

**अथ अस्य नित्यबलिः -**

भोजनवेलायां घृतगुळव्यञ्जनादिसहितं सक्तुम् निर्वर्त्य, मूलविद्यां त्रिवारं जप्त्वा, कृष्णाय शुने दद्यात् ।।

---

1. इन्द्रादि अनन्तपर्यन्ताः दशदिक्पालकाः अत्र पूजनीयाः ।।

**अथ आपदुद्धारणमन्त्रप्रसङ्गात् शैवाष्टाक्षरविधानमुच्यते -**

वामदेव ऋषिः । पङ्क्तिः छन्दः । सदाशिवो देवता । पञ्चाक्षरवदङ्गानि । अत्रापि हृदयादि योगो विवरणकृन्मतः । ओं बीजं । ह्रीं शक्तिः ।

ध्यानम् -

**वामाङ्कन्यस्तवामेतरकरकमलायास्तथा वामबाहु-**
**न्यस्तारक्तोत्पलायास्स्तनविधृतिलसद्वामवाहुः प्रियायाः ।**
**नानाकल्पाभिरामो धृतपरशुमृगेष्टः करैः काञ्चनाभो**
**ध्येयः पद्मासनस्थः स्मरललितवपुः संपदे पार्वतीशः ।।**

ओं ह्रीं हौं नमः शिवाय इति मन्त्रः । अष्टलक्षजपः । ऐश्वर्यफलप्रधानोऽयं मन्त्रः । अष्टसहस्रं नृपतरुसमिद्भिः जुहुयात्पुरश्चरणार्थम् ।। नृपतरु-कोन्रे । प्रासादोक्तपञ्चब्रह्मोक्तवत्पूजा ।

**अथ शैवाष्टाक्षरमन्त्रप्रसङ्गात् साम्बदक्षिणामूर्तिमन्त्रोऽपि लिख्यते-**

आनन्दवामदेव ऋषिः । भोगपङ्क्तिः छन्दः । साम्बदक्षिणामूर्तिः देवता ।।

ओं ऐं हृत् । नमः क्लीं शिरः । शिवाय सौः शिखा । ओं ऐं कवचम् । नमः क्लीं नेत्रम् । शिवायै सौः अस्त्रम् ।।

---

1. प्रसिद्धपञ्चाक्षरीविधानोक्तषडङ्गानि - ओं हृत् । नं शिरः । मं शिखा । शिं कवचं । वां नेत्रं । यं अस्त्रं । अथवा, शास्त्रान्तरोक्तप्रकार उच्यते । ओं ओं सर्वज्ञशक्तिधाम्ने हृत् । ओ नं नित्यतृप्तशक्तिधाम्ने शिरः । ओं मं अनादिबोधशक्तिधाम्ने शिखा । ओं शिं स्वतन्त्रशक्तिधाम्ने कवचम् । ओं वां अलुप्तशक्तिधाम्ने नेत्रं । ओं यं अनन्तशक्तिधाम्ने अस्त्रं । एतद्वा कुर्यात् ।।

ध्यानम् -

**वामोरोरुपरिस्थितां गिरिसुतामन्योन्यमालिङ्गितां**
**श्यामामुत्पलधारिणीं शशिनिभं चालोकयन्तीं शिवम् ।**
**आश्लेषेण करेण पुस्तकमथो कुम्भं सदापूरितं[1]**
**मुद्रां ज्ञानमयीं दधानमपरे मुक्ताक्षमालां भजे ।।**

ओं ऐं नमः क्लीं शिवाय सौः इति मन्त्रः । विद्याफलप्रधानोऽयं मन्त्रः ।

अथ साम्बदक्षिणामूर्तिप्रसङ्गात् अघोरमन्त्रविधानमुच्यते -

अघोर ऋषिः । त्रिष्टुप् छन्दः । अघोररुद्रो देवता । हुं बीजम् । ह्रीं शक्तिः ।।

ह्रीं स्फुर स्फुर हृत् । प्रस्फुर प्रस्फुर शिरः । घोर घोर तनुरूप शिखा । प्रचट प्रचट कवचम् । कह कह वम वम नेत्रत्रयम् । बन्ध बन्ध खादय खादय हुं फट् अस्त्रम् ।।

ध्यानम् -

**कालाभ्राभः कराग्रैः परशुडमरुकौ खड्गखेटौ च बाणे-**
**ष्वासौ शूलं कपालं दधदतिभयदो भीषणास्यस्त्रिणेत्रः ।**
**रक्ताकाराम्बरोऽहिप्रवरघटितगात्रोरिनागग्रहादीन्**
**खादन्शिष्टार्थदायी भवदनभिमतश्चिन्तरो स्यादघोरः ।।**

ह्रीं स्फुर स्फुर प्रस्फुर प्रस्फुर घोर घोर तनुरूप चट चट प्रचट प्रचट कह कह वम वम बन्ध बन्ध खादय खादय हुं फट् स्वाहा । इति मन्त्रः । रक्षाप्रधानोऽयं मन्त्रः ।।

---

1. सुधापूरितं इति ग्रन्थान्तरे दृश्यते ।।

अथ पदन्यासः -

**कटकास्यकण्ठहृन्ना-**

**भ्यन्धूरुषु जानुजङ्घयोः पदयोः ।**

**एकादशधा भिन्नैः**

**मन्त्रार्णैः न्यस्य तद्विग्रहो मन्त्री ।।**

एकादशधा विभागप्रकार उच्यते -

**पञ्चभिरथो सषड्भिः द्वाभ्यामप्यष्टभिश्चतुर्भिश्च ।**

**षड्भिश्चतुस्त्रयेण च षड्भिर्द्वाभ्यां च भेदितैः क्रमशः ।।**

चतुरस्त्रयेणेति कहादिचतुष्कं वमादिचतुष्कं बन्धादिचतुष्कं च ।। एतैस्त्रिभिरित्यर्थः । सर्वपदादौ प्रणवशक्ति योजनोये ।। लक्षजपः ।।

**स्वच्छो मुमुक्षोस्तु भवेदघोरः**

**काम्यक्रियायामथ रक्तवर्णः ।**

**कृष्णोऽभिचारे ग्रहवैकृते च**

**प्रोक्तो जपः स्यादपि लक्षमानः ।।**

धृतावसिक्तैः सतिलैः सतण्डुलैर्वा, घृताप्लुतैः हविर्भिः वा दशांशं पुरश्चरणहोमः ।।

अथ पूजायाः पीठविधानार्थं यन्त्रविधानमुच्यते --

**हृल्लेखास्थित-साध्याक्षर-विलसत्कर्णिकं कलावीतम् ।**

**वर्गाष्टकात्तकेसरमन्ते सह लक्षयाक्षरो(ल्ल) लिखितम् ।।**

**मन्त्राक्षरत्रयाद्यदल मध्यदलाग्रं च तद्बाह्ये**

**वह्निपुराश्रसमाश्रितकवचास्त्रं प्रतिविलिख्य यन्त्रमिदम् ।।**

अस्यार्थः - अष्टपत्रं पद्मं विलिख्य, तत्कर्णिकायां भुवनेशीं विलिख्य, तन्मध्ये साध्यनामादीन् विलिखेत् । पुनः कर्णिकायां, स्वरैः सबिन्दुकैः साध्यनामादीन् वेष्टयेत् । पुनः दलमध्ये, कादीन् मान्तान् वर्गान् पञ्चसु दलमूलेषु लिखित्वा, षष्ठे यादित्रयं, सप्तमे वादित्रयं, अष्टमे सादि चतुष्टयं च विलिखेत् । पुनः अघोरमन्त्राक्षराणि त्रीणि त्रीणि दलमध्ये विलिखेत् । अवशिष्टाक्षराणि त्रीणी त्रीणि दलाग्रेषु विलिखेत् । पुनः तद्बाह्ये षट्कोणं विलिख्य, तेषु प्राग्रक्षोऽनिलकोणेषु हुं इति विलिखेत् । प्रत्यगग्नीशकोणेषु 'फट्' इति विलिखेत् । अस्मिन् यन्त्रमण्डले प्रासादोक्ते शैवपीठे पञ्चगव्यैर्वा क्वाथोदकेन वा पुरश्चरणकलशं संपूर्य, अघोरमूर्तिं समावाह्य समर्चयेत् ।।

अङ्गैः प्रथमावृतिः

परशवे नमः । डमरुकाय । खड्गाय । खेटाय । बाणाय । धनुषे । शूलाय । कपालाय । इति द्वितीयावृत्तिः ।।

मातृभिस्तृतीया । इन्द्रादिभिश्चतुर्थी । अथवा पूर्वोक्तपञ्चाक्षरवत् पूजां कुर्यात् ।

अथ अघोरास्त्रमन्त्रप्रसङ्गात् मन्त्रदेवताप्रकाशिकोक्तः पाशुपतास्त्रमन्त्रोऽपि लिख्यते -

वामदेव ऋषिः । पङ्क्तिः छन्दः । पशुपतिर्देवता । श्लीं बीजम् । हुं शक्तिः । प्रणवादि मन्त्राक्षरैः षडङ्गन्यासः ।।

ध्यानम् -

**पञ्चवक्त्रं महाबाहुं दशबाहुं त्रिलोचनम् ।**
**भीषणं भास्करं रुद्रं पिङ्गभ्रूश्मश्रुमूर्धजम् ।।**

**खड्ग-खेटक-नाराच-धनुः-शर-कमण्डलून् ।**
**शक्तिं शूलं च परशुं ब्रह्मदण्डं कराग्रकैः ।।**

विभ्राणं स्फटिकाद्र्याभं नागाभरणभूषितम् ।
सर्वास्त्रेशं पशुपतिं सर्वरक्षाकरं स्मरेत् ।।

ओं श्लीं पशु हुं फट् । इति मन्त्रः । रक्षाप्रधानोऽयं मन्त्रः । अक्षरलक्षजपः । पायसेन दशांशं होमः ।।

**अथ पूजा -**

प्रासादोक्तपीठे समावाह्य समर्चयेत् । तत्पुरुषादि पञ्चब्रह्मनामभिः प्रथमावरणम् । अङ्गैः द्वितीयावृतिः । प्रासादविधाने पूर्वोक्तैः अनन्ताद्यैः तृतीयावृतिः । उमादिभिः चतुर्थी । ध्यानोक्तायुधैः पञ्चमम् (पञ्चमावरणम्) । इन्द्रादिभिः षष्ठं (षष्ठावरणम्) ।

**अथ प्रयोगः -**

ध्यानपूर्वकमन्त्रजपः सर्वभीतिनिवृत्तिकरः । एतन्मत्राभिमन्त्रितौषध-प्रयोगः सर्वविषरोगहरः । एतन्मन्त्रहोमसंपात (जप) समेतशस्त्रप्रयोगः सर्वशत्रुसेनादि ध्वंसको विजयकरश्च भवति ।।

**अनेन शत(सङ्ख्यं) सत्रजप्तं जलं ग्रस्तामुखे क्षिपेत् ।**
**सद्यस्तं मुञ्चति क्रन्दन् ग्रहो मन्त्रप्रभावतः ।।**

अथ अघोरादि मन्त्रप्रसङ्गात् खड्गरावणमन्त्रोऽपि रौद्रत्व-सामान्येन मन्त्रदेवता (प्रकाशिकोक्त) प्रकारेण लिख्यते --

भैरव ऋषिः । अनुष्टुप् छन्दः । खड्गरावणरुद्रो देवता ।।
खां हृत् । खीं शिरः । इत्याद्यङ्गानि ।।
खौं बीजं । ह्रीं शक्तिः [1] ।

ध्यानम् -

**घण्टा-कपाल-सृणि-मुण्डकपाल[2]-खेट-**
**खड्वाङ्ग-शूल-डमरूनभयं दधानम् ।**

---

1. इतः परमेव अङ्गन्यासः कर्तव्यः । 2 कृपाण इति प्रपञ्चसारसारसङ्ग्रहे

रक्ताङ्गमिन्दुशकलाभरणं त्रिणेत्रं
पञ्चाननाब्जमरुणांशुकमीशमीडे ।।

ओं नमः पशुपतये ओं नमो भूताधिपतये ओं नमो रुद्राय लल खङ्गरावण विहर विहर सर सर नृत्य नृत्य श्मशानभस्मार्चितशरीराय घण्टाकपालमालाधराय व्याघ्रचर्मपरिधानाय शशाङ्ककृतशेखराय कृष्णासर्पयज्ञोपवीतिने चल चल वल्ग वल्ग अनिवृत्तिकपालिने हन हन भूतान् त्रासय त्रासय मण्डलमध्ये घट्ट घट्ट रुद्राङ्कुशेन शमय प्रवेशय प्रवेशय चण्डासिधारापतिरुद्र अज्ञापयति स्वाहा[1] ।।

---

1. श्रीशारदातिलके एकोनविंशपटले मन्त्रोद्धारः -

प्रणवो हृदयं पश्चात् ङेऽन्तं पशुपतिं पुनः ।
तारो नमो मूतपदं ततोऽधिपतये ध्रुवम् ।।

नमो रुद्राय युगलं खड्गरावणशब्दतः ।
विहरद्वितयं पश्चात्सरनृत्ययुगं पृथक् ।।

श्मशानभस्मार्चितान्ते शरीराय ततः परम् ।
घण्टाकपालमालादि धरोयेति पदं पुनः ।।

व्याघ्रचर्मपदस्यान्ते परिधानाय तत्परम् ।
शशाङ्ककृतशब्दान्ते शेखराय ततः परम् ।।

कृष्णसर्पपदं पश्चात्ततो यज्ञोपवीतिने ।
चलयुरमं वल्गुयुगमनिवर्तकपालिने ।।

हनुयुग्मं ततो भूतान् त्रासयद्वितयं पुनः ।
भूयो मण्डलमध्ये स्यात् कट्टयुग्मं ततः परम् ।।

रुद्राङ्कुशेन शमय प्रवेशय युगं ततः ।
आवेशययुगं पश्चात् चण्डासि पदमीरयेत् ।।

धराधिपतिरुद्रोऽथ ज्ञापयत्यग्निसुन्दरी ।
खड्गरावणमन्त्रोऽयं सप्तत्यूर्ध्वशताक्षरः ।। इति ।।

ङेऽन्तं पशुपतिं - पशुपतये । तारः - प्रणवः । ध्रुवं - प्रणवम् ।। अग्निसुन्दरी - स्वाहा ।।

खड्गरावणमन्त्रोऽयं सप्तत्यूर्ध्वशताक्षरः । अयुतद्वितयं जपेत् । घृतसिक्तेन पायसेन दशांशं जुहुयात्, पुरश्चरणार्थम् ।।

अथ पूजाविधिः -

प्राक् प्रासादविधानोक्तशैवपीठे खं इति बीजेन मूर्तिं सम्भाव्य, मूलेन समावाह्य समर्चयेत् । अङ्गैः दलमूलेषु प्रथमावृतिः ।

चुलुकग्डायै (?) नमः । प्रस्खलन्त्यै । कृष्णपिङ्गलायै । फल्गुन्यै । चिरमल्लायै । मत्तमालिकायै । ठेङ्किण्यै । वज्राङ्किकतजटायै नमः । इति द्वितीयावृतिः ।

मातृभिस्तृतीया ।।

रौद्राय । पिङ्गलाय । श्मशानाङ्काय । भीषणाय । दृढकाय[1] । भृङ्गिरिटये । अमामर्दाय । महाकालाय । एतेऽष्टौ । द्वारपालाः द्वौ द्वौ पूर्वादिदिक्षु ।

पुनः, कुम्भकर्णाय । अशोकाय । भल्लाटकाय । जातहारकाय । इति, कोणेष्वेकैकम् । एवं द्वारपालैश्चतुर्थ्यावृतिः ।।

इन्द्रादिभिः पञ्चमी ।। इत्थं संपूजयेत् ।।
भूतनिग्रहप्रधानोऽयं मन्त्रः ।।

अथ खड्गरावणमन्त्रप्रसङ्गात् शरभसालुवमन्त्रोऽपि रौद्रत्वसामान्येन कल्पान्तरोक्तप्रकारेण अत्र योग्यतावशात् लिख्यते ।

वामदेव ऋषिः । अतिजगती छन्दः । कालाग्निरुद्रो देवता । अथवा - कालाग्निरुद्र ऋषिः । जगती छन्दः । शरभो देवता ।। ओं बीजं । स्वाहा शक्तिः ।।

---

1. दृढकण्ठाय इत्यपि पाठः ।

ओं खें खां खं फट् हृत् । प्राणग्रहासि प्राणग्रहासि हुं फट् शिरः । सर्वशत्रुसंहारणाय शिखा । शरभसालुवाय कवचम् । पक्षिराजाय हु फट् स्वाहा अस्त्रम् । ओं इति दिग्बन्धः ।।

ध्यानम् -

चन्द्रार्काग्नित्रिदृष्टिः कुलिश-वर-नखश्चञ्चलात्युग्रजिह्वः
काली दुर्गा च पक्षौ हृदयजठरगो भैरवो वाडवाग्निः[1] ।
ऊरूस्थौ व्याधिमृत्यू शरभवरखगश्चण्डवातातिवेगः
संहर्ता सर्वशत्रून् स जयति शरभःसालुवः पक्षिराजः ।।

मृगस्त्वर्धशरीरेण पक्षाभ्यां चञ्चुना द्विजः ।
अधो वक्त्रः चतुष्पादः ऊर्ध्ववक्त्रश्चतुर्भुजः[2] ।।

कालान्तदहनः पुण्यो नीलजीमूतनिःस्वनः ।
अरिस्तद्दर्शनादेव विनष्टबलविक्रमः ।।

सटाछटोग्ररूपाय पक्षविक्षिप्तभूभृते ।
अष्टपादाय रुद्राय नमः शरभमूर्तये ।।

ओं खें खां खं फट् प्राणग्रहासि प्राणग्रहासि हुं फट् सर्वशत्रु संहारणाय शरभसालुवाय पक्षिराजाय हुं फट् स्वाहा इति मन्त्रः । ओं नमोऽष्टपादाय सहस्रबाहवे द्विशिरसे त्रिणेत्राय द्विपक्षाय अग्निवर्णाय मृगविहङ्गरूपाय वीरशरभेश्वराय ओम् । इति च मन्त्रान्तरम् । त्रयोदशाष्टचतुःपञ्चाष्टनववर्णैः अङ्गानि । ऋष्यादि पूर्ववत् ।।

---

1. जाठराग्निः इति ग्रन्थान्तरे ।

2. मृगस्त्वर्धशरीरेण पक्षाभ्यां चञ्चुना द्विजः ।
घोरवक्त्रश्चतुष्पादः ऊर्ध्ववक्त्रश्चतुर्भुजः

रक्षाकराविमौ मन्त्रौ । द्विचत्वारिंशदर्णसहस्रं जपेत् ।। अस्यैव शरभस्य ध्यानान्तरम् -

अष्टाङ्घ्रिश्च सहस्रबाहुरनलच्छायाशिरोयुग्मभृत्
द्वित्र्यक्षोऽतिजवो द्विपुच्छ उदितःसाक्षान्नृसिंह्मासहः ।
अर्धेनापि मृगाकृतिः पुनरथाप्यर्धेन पक्ष्याकृतिः
श्रीवीरः शरभः स पातु सुचिरं नीत्वा सदा मां हृदि ।।

क्षीरोदेन दशांशं पुरश्चरणहोमः ।।

अस्यैव यन्त्रमाह -

रंकारं पूर्वमालिख्य तद्बाह्ये वर्त्तुलं न्यसेत् ।
तद्वाह्ये चतुरस्रं च तद्बाह्येऽष्टदलं भवेत् ।।

तद्वाह्ये षोडशारं च तदग्रे वृत्तमालिखेत् ।
तदग्रे पञ्चकोणं च रंकारे साध्यनामकम् ।।

वर्त्तुले मूलमालिख्य चतुरस्रे द्रां द्रौं ह्रीं क्ष्म्र्यूं ।
अथ तत्र कवर्गस्य द्वितीयं कोणतो लिखेत् ।।

दलाष्टके लं रं शं षं वं यं हं तथैव च ।
लोकेशबीजान्येतानि लिखित्वा षोडशे पुनः ।।

षोडशाख्यान् स्वरान्वृते साध्यकाख्यां समन्ततः ।
पञ्चकोणेषु द्रां द्रीं क्लीं ब्लूं सः इत्यादि विन्यसेत् ।।

यन्त्रमेवं समालिख्य तालपत्रे प्रयत्नतः ।
स्नुहिक्षीरेण तं लिप्य तत्र यन्त्रं च निक्षिपेत् ।।

चुल्योपरि घटे स्थाप्य तापयेत्सर्वशत्रवः ।
गृहे स्थिताः पलायन्ते प्रसादात्सालुवस्य च ।।
साधकः सर्वमाप्नोति देशान्तरगतोऽपि वा ।

अस्यार्थः - प्रथमं सबिन्दुकं रेफं विलिख्य, तन्मध्ये साध्यनामादीन् विलिखेत् । तद्बहिः वृतं विलिख्य तस्मिन् वृत्ते मूलमन्त्रेण वेष्टयेत् । तद्बहिः चतुरस्त्रं विलिख्य, चतुरस्त्रदिक्षु द्रां द्रौं ह्लीं क्ष्म्यूं इत्येकैकं अक्षरं विलिखेत् । (खं खं इति विदिक्षु विलिखेत्) तद्बहिः (अष्टदलं विलिख्य तेषु) दलेषु लं रं शं षं वं यं सं हं - प्रागग्नीशनिऋति - जलेश - वायु-सोम - प्रेतेश दिक्षु एकैकं यथायथं[1] विलिखेत् । तद्बहिः षोडशदलं विलिख्य तेषु दलेषु षडशस्वरान् विलिखेत् । तद्बहिर्वृत्तं विलिख्य परितः साध्यवर्णैः वेष्टयेत् । तद्बहिः पञ्चकोणं विलिख्य तेषु कोणेषु द्रां द्रीं क्लीं ब्लूं सः - इत्येकैकं अक्षरं विलिखेत् । एवं तालपत्रे विलिख्य तद्यन्त्रं स्नुहिक्षीरेण विलिप्य, घटे स्नुहिक्षीरं विसृज्य, चुल्युपरि संस्थाप्य तापयेत् ।। उच्चाटनं भवति ।। स्नुहिक्षीरं - चिकणीसुपारीचा रसः ।

**त्रीकोणं विलिखेत्पूर्वं तद्बाह्ये तु दलद्वयम् ।**
**द्वादशारं तु तद्बाह्ये तद्बाह्ये तु नवाश्रकम् ।।**

**सप्ताश्रं च तु पञ्चाश्रं भूपुरं चक्रमालिखेत् ।**
**पावकादि पृथिव्यन्तं लिखेद्यन्त्रं यथाक्रमम् ।।**

**तद्बहिः कोणषट्के तु प्रागारभ्य मनुं शिवे ।**
**खट् फट्जहि तथा छिन्धि भिन्धि हन्धि लिखेत् क्रमात् ।।**

पदषट्कमित्यर्थः -

**अकारादि क्षकारान्तं वेष्टयेद्बिन्दुसंयुतम् ।**
**महायन्त्रमिदं पुण्यं सप्तावरणकं परम् ।।**

**सर्वभूतवशीकारं सर्वशत्रुजयं सुखम् ।**
**नानाज्वरहरं यन्त्रं नानाक्षुद्रनिवारणम् ।।**

---

1. लमादि अक्षराणि प्रागादि दिक्षु तत्तत्स्थान एव विलिखेत् इत्यर्थः ।

अथ प्रयोगः -

अजं माहिषकं चैव नवनीतं तु यो नरः ।
हुनेत्तत्र तु मूलेन साध्यनाम पुरःसरम् ।।

साध्यो वश्यो भवेत्क्षिप्रं सत्यं सत्यं न संशयः ।
नारी च दासी भवति शिवेन परिभाषितम् ।।

प्रयोगान्तरम् -

दूर्वाङ्कुरामृताखण्डैः गोधूमैश्च विशेषतः ।
तिललाजैः सर्षपैश्च मिश्रीकृत्य हुनेत्ततः ।।

त्रिदिनान्ते सुसंघाताः पलायन्ते न संशयः ।

प्रयोगान्तरम् -

द्विषन्तमुद्दिश्य सहस्रवारं
जप्त्वा घृतं तेन हुनेत् हुताशे ।
दिनावसानात्पुरतो रिपूणां
शरीरनाशाय सुसिद्धमन्त्री ।।

पायान्नो देवः शरभस्त्वपायात्
सदाऽरेः रोगाद्विपिनोरगाभ्याम् ।
वैश्वानाराटव्यकरि - ऋजकेभ्यः
परेभ्यो भूतभ्यो रुष्टात् कृतान्तात् ।।

इति, शरभन्त्रः ।।

आथर्वणमिदं मन्त्रं अमोघं दुरितापहम् ।
सर्वसंरक्षणं श्रेष्ठं सर्वसौभाग्यदायकम् ।।

प्रयोगान्तरम् -

मधु मधूकं मधुकं दशाहं
सहस्रमेकैकदिनं वरेण्ये ।
होमं प्रकुर्यात्प्रयतो मनीषिभिः
समस्तदुर्वारभयाद्विमुक्त्यै ।।

लवङ्गवेलं मधुकं च कोष्टं
तिलं घृतं चम्पककुल्मलं च ।
दिनं सहस्रं प्रयतो दशाहं
उन्माद - तापज्वर - भूतशान्त्यै ।।

श्रीभार्गवीभिर्नवरात्रहोमैः
प्रयान्ति शान्तिं कुपिताश्च देवाः ।
उदुम्बराश्वत्थसमित्सहस्रैः
कुर्यात् चतुर्थज्वरभूतशान्त्यै ।।

पलाशशाखाभिरभीष्टसिध्यै
रक्षाय कुर्यादथ खादिरोत्थैः ।
उदुम्बरो. बहुमित्रकाम-
स्त्वनन्तरायाय शमीसमिद्भिः ।।

पुत्राय कुर्यादथ दीपिकाभिः
प्रसादसिध्यै करवीरपुष्पैः ।
वश्याय कुर्यान्मधुसिक्तपद्मै-
राकर्षणाय स्मरपञ्चबाणैः ।।

विद्वेषणायाथ विषाङ्घ्रिपोत्थैः
स्तम्भक्रियायै दिविजाप्रसूनैः ।

उच्चाटनाय स्नुहिबालपत्रैः
संहारणायार्ककटुस्नुहीभिः ।।

धुत्तुरशाखा - फल - पत्र - पुष्पै -
रुन्मादनायास्य शिफां विमुक्त्यै ।
यद्धान्यहोमे हुतभस्य शीघ्रं
तद्धान्यराशेस्तनुते विवृद्धिम् ।।

दाडिमैः कुसुमजालकैर्नराः
मन्मथत्वमुपायान्ति सुभ्रुवाम् ।
एवमेव नियुतं रवेर्दिने
कारयेदखिलकाम्यसिद्धये ।।

अन्नेन चान्नं पयसा पयौघं
घृतेन भाग्यं मधुना च नादम् ।
तैलेन सारं दधिभिश्च पुष्टिं
चूतप्रवालैरभिरूपसिद्धिम् ।।

त्रिकटुसर्षपहिङ्ग्वजमोदा
न्युरगमौलिससैन्धवजीरकम् ।
सघृतपारदटङ्कणयुक्तं
शरभहोममरिक्षयमेतत् ।।

साध्यर्क्षमूर्तिं परिकल्प्य तस्मिन्
वायुं समुत्पाद्य मनोः शतेन ।
श्वेतार्कदुग्धेन ततोऽष्टचूर्णं
पिष्ट्वा समालिप्य विताप्य वह्नौ ।।

लेप्य प्रताप्यथ पुनः प्रलिप्य
ताप्य प्रलिप्त्वा निखनेत् श्मशाने ।
दत्वा बलिं मन्त्रमथ त्रिवारं
जप्त्वा ततः स्नानमथाचरित्वा ।।

जपेत्सहस्रं शरभेश्वराख्यं
जपावसाने निखिलैरवेद्यः ।
शरीरपिण्डं तरसा विहाय
सद्यो रिपुः कालपुरीं प्रयाति ।।

तत्र होमद्रव्याणां नामानि लिख्यन्ते -

मधु मद । मधूकं-मोहांचि फुलें । मधुकं अतिमधुरम् । श्रीभार्गवी श्वेतार्कम् । खादिरं खैर । दीपिका-पुत्रदीपिकै । पञ्चबाणाः-[1]अरविन्दं अशीकं तेमा शरुशंपकं करुनैतलपू । विषांघ्रिपं-विषमुष्टि । दिविजाप्रसूनं-अस्यैव तस्य संज्ञा । दाडिमी-दालिभं । त्रिकटु-सुंठि मिरे पिपली । धुत्तूरं-धोत्रा । शिफा इति मूलमुच्यते । सर्षपं-मोहरया । हिंगु-हिंगु । अजमोदं-बोंबा । उरगमौलिः तत्संज्ञमेव । सैन्धवं-मीठ । पारदं-पारा । टङ्कं-टाकअसार । अष्टचूर्णं-सुंठि मिरे पिपल्या कालीजिरे जिरे सैन्धव लवण हिङ्ग वोंवा । इति ।।

प्रयोगान्तरम् -

तद्गृह्य तत्साध्यविहङ्गमाङ्गं
सूत्रेण कोदण्डमिवाथ बद्ध्वा ।
साध्याङ्गजैर्दक्षपदाङ्गमृद्भिः
कृत्वाऽऽकृतिं वै परिकल्प्य वायुम् ।।

---

उक्तं च - अरविन्दमशोकं च चूतं च नवमल्लिका ।
नीलोत्पलं च पञ्चैते पञ्चबाणस्य सायकाः ।।

मञ्जिष्ठमालिप्य मुखे च कण्ठे
त्वलातचूर्णं त्वथ शेषदेहे ।
तदस्थिशेषेण करेण कण्ठे
मन्त्रं समुच्चार्य विमुच्य चैवम् ।।

शतप्रयोगात्स्वरिपुः स्वदेहात्
प्रयाति याम्यां पुरमाशु घोरम् ।

कृत्वा साध्यचतुष्पदास्थिनिचयेषूत्कृष्टकां कृत्तिकां
तस्याः क्वाणकवस्त्रभूषणसुमालेपाञ्जनैश्चन्दनैः ।
आभूष्य स्वकरेण मूर्ध्नी निकटे स्पृष्ट्वा शतं मारुतं
जप्त्वा मन्त्रसहस्रकं च विधिवत् खड्गेन तां पीडयेत् ।।

यस्मिन् पीडितमत्र शत्रुतनुषु (?) क्षिप्रं तु तस्मिंस्थले
पीडां कुर्वति नूनमग्नितपनादाविज्वराङ्गो भवेत् ।
अर्कक्षीरकटुत्रयेण सहितां वह्नौ प्रदग्ध्वा तदा
शत्रुः कालपुरीं प्रयाति तरसा श्रीसालुवाज्ञावशात् ।।

कृत्तिं कृत्वाथ साध्यर्क्षसमुचिततरोः क्षीरमालिप्य तस्यां
वायुं संस्थाप्य जप्त्वा मनुमथ शतकं क्षारतोयेऽनलात्तम् ।
कुर्याश्निक्षिप्तमत्र प्रवचनकरणैःशत्रुलोकास्तदानीं
प्रायः सन्तापपूर्वज्वरवरसहिताः सम्यगार्ता भवन्ति ।।

साध्यद्रुत्वङ्मनोज्ञां द्विविधकृतियुतां तन्तुनैकीकृतां तां
वायुं संस्थाप्य तस्याः शिरसि तनयकं जन्तुमावेशयित्वा ।
नासे गौलीं च कण्ठे भ्रमरयुगमथो जाठरे त्वाखुसूनुं
जप्त्वा मन्त्रं तु मन्त्री द्विशतमथ खनेद्वैरिनाशाय कोष्ठे ।।

अथ शरभमन्त्रप्रसङ्गात् सुब्रह्मण्यमन्त्रोऽपि लिख्यते -

काश्यप ऋषिः । त्रिष्टुप् छन्दः । सुब्रह्मण्यो देवता ।। सं बीजम् । सां शक्तिः ।।

सां सुब्रह्मण्याय स्वाहा हृत् । सीं इत्यादि मूलमन्त्रसहितैः अङ्गन्यासाः ।

ध्यानम् -

**शक्तिहस्तं विरूपाक्षं शिखिवाहं षडाननम् ।**
**तरुणं रिपुरोगघ्नं भावयेत्कुक्कुटध्वजम् ।।**

सुं सुब्रह्मण्याय स्वाहा इति मन्त्रः । त्रिसहस्रजपः ।।

अथ सुब्रह्मण्यमन्त्रप्रसङ्गात् वीरभद्रमन्त्रोऽपि मन्त्रसारोक्तोऽत्र योग्यतावशात् लिख्यते ।

ब्रह्मा ऋषिः । अनुष्टुप् छन्दः । वीरभद्रो देवता ।। ओं हौं वीरभद्राय हृत् । अतिक्रूराय शिरः । रुद्रकोपसंभवाय शिखा । सर्वदुष्ट कवचम् । निबर्हणाय नेत्रम् । हुं फट् स्वाहा अस्त्रम् ।।
ध्यानम् -

**गोक्षीराभं दधानं परशुडमरुकौ खड्गखेटौ कपालं**
**शीलं चाभीतिदाने त्रिणयनलसितं व्याघ्रचर्मम्बराढ्यम् ।**
**वेतालारूढमुग्रं कपिशतरजटाबद्धशीतांशुखण्डं**
**ध्यायेद्भोगीन्द्रभूषं निजगणसहितं सन्ततं वीरभद्रम् ।।**

ओं हौं वीरभद्राय अतिक्रूराय रुद्रकोपसंभवाय सर्वदुष्टनिबर्हणाय हुं फट् स्वाहा इति द्वात्रिंशदक्षरो मन्त्रः । रक्षाप्रधानोऽयं मन्त्रः । द्वादशलक्ष-जपः । रक्तहयारिपुष्पैः वा त्रिमधुरसिक्तैः कमलैर्वा दशांशं पुरश्चरणहोमः ।।

अथ वीरभद्रमन्त्रप्रसङ्गात् मृत्युञ्जयविधानमुच्यते -

कहोलक ऋषिः । देवी गायत्री छन्दः । मृत्युञ्जयरुद्रो देवता । जुं बीजम् । सः शक्तिः ।। सां हृत् । सीं शिरः । इत्याद्यङ्गानि ।। नाभिहृत् भ्रूमध्येषु अक्षरान्न्यसेत् ।।

ध्यानम् -

**स्फुटितनलिनसंस्थं मौलिबद्धेन्दुरेखा-**
**गलदमृतजलार्द्रचन्द्रबह्न्यर्कनेत्रम् ।**
**स्वकरकलितमुद्रा-पाश-वेदाक्षमालां-**
**स्फटिकरजतमुक्तागौरमीशं नमामि ।।**

तत्र वेदो हरिणशिशुः ।। ओं जुंसः इति मन्त्रः ।।

कसाप्तमः कर्णयुतोर्ध्वचन्द्रवान् कुपञ्चमो बिन्दुयुतो ध्रुवादिकः ।
मनुस्त्वयं मृत्युजयात्मकः स्फुटः समीरितःसाधकरक्षणक्षमः ।।
इति मन्त्रोद्धारः[1] । त्रिलक्षजपः । गलूच्या दुग्धमिश्रिताज्यसिक्तया दशांशं जुहुयात् । पुरश्चरणहोमः । आयुःप्रधानोऽयं मन्त्रः ।।

अथ पूजा -

प्रासादोक्ते शैवपीठे समावाह्य समर्चयेत् । अङ्गैः प्रथमावृतिः । इन्द्रादिभिर्द्वितीया । वज्रादिभिः तृतीया ।।

अथ यन्त्रमाह -

**आदौ तारं विलिखतु ससाध्याह्वयं कर्णिकायां**
**दिक्पत्रेष्वप्यपरमपरं चापि तत्कोणकेषु ।**

---

1. श्रीशारदातिलकोक्तमन्त्रोद्धारः -

तारः स्थिरा सकर्णेन्दु भृगुः सर्गविभूषितः ।।

तारः प्रणवः । स्थिरा जः । कर्णो वामकर्णः ऊ । इन्दुर्बिन्दुस्तेन जूम् ।

भृगुः सकारः । सर्गो विसर्गस्तद्युक्तः ।. ओं जूं सः ।।

**भूयो मूमेः पुरमनुमृगाङ्कं तदश्रेषु टान्तं**
**जप्त्वा बद्धं ग्रहगदविषध्वंसि यन्त्रं तदेतत् ।।**

अस्यार्थः - प्रथमं अष्टपत्रपद्मं विलिख्य, तत्कर्णिकायां प्रणवं विलिख्य तदन्तः साध्यनामादीन् विलिखेत् । पुनः पूर्वादि दिक्पत्रचतुष्टये तु 'जुं' इति विलिखेत् । पुनः आग्नेयादि कोणचुतुष्टये तु 'सः' इति विलिखेत् । पुनः तद्बहिः चतुरस्रं विलिख्य, तद्बहिरावृत्तरूपेण 'ठं' इति विलिखेत् । चतुरस्रकोणेषु चतुर्ष्वपि 'ठं' इति विलिखेत् । एवं विलिख्य, जप्त्वा, धारयेत् । इदं ग्रहगदादिध्वंसनमायुष्करं च । अस्मिन् मण्डले शैवपीठं संपूज्य, कलशं संपूर्य, मूर्तिं संपूज्य, जप्त्वा अभिषिञ्चेत्, साध्यम् । श्रीवश्यकरं ग्रहाभिचारहरम् (च भवति) ।।

अथ मृत्युञ्जयमन्त्रप्रसङ्गात् अजपाविधानमुच्यते -

ब्रह्मा ऋषिः । देवी गायत्री छन्दः । परमात्मा देवता । हं बीजम् । सः शक्तिः ।।

हं सां हृत् । हं सीं शिरः । हं सूं शिखा - इत्यादि षडङ्गानि ।।

ध्यानम् -

**अरुणकनकवर्णं पद्महस्तं च गौरी-**
**हरनियमितिचिह्नं सौम्यतानीरपातम् (?) ।**
**भवतु भवदभीष्टप्राप्तये पाशटङ्का-**
**ऽभयवरदविचित्रं सौम्यतानूनपातम् ।।**

सोमाग्निः स्वरूपं ।। हंस इति मन्त्रः ।।

प्रयोगविशेषे 'सोऽहं' इति च योजयेत् । द्वादशलक्षजपः । आज्यसिक्तेन सहस्रं जुहुयात् । मोक्षारोग्यप्रधानोऽयं मन्त्रः ।।

।। इति श्रीमद्राजाधिराजतुलजेन्द्रमहाराजविरचिते मन्त्रशास्त्रसङ्ग्रहे शिवविषयो नाम द्वितीयोऽध्यायः ।।

## ।। तृतीयोऽध्यायः ।।

अथ सूर्यार्घ्यप्रदानमाह - [1]सूर्यं यथाविधि संपूज्य,

**प्रणिधाय ताम्ररचितं**
**चषकं प्रजपेन्मनुं प्रतिगतक्रमतः ।**
**परिपूरयेत्सुविमलैः**
**सलिलैः . . . . . . . . . . . . . . . . . ।।**

---

1. सौराष्टाक्षरमन्त्रस्य देवभार्गव (देवभाग) ऋषिः । गायत्री छन्दः । आदित्यो देवता । ओं बीजम् । ह्रीं शक्तिः ।।

ओं सत्यतेजोज्ज्वलज्ज्वालामणि हुं फट् स्वाहा हृत् । ओं ब्रह्मतेजोज्ज्वलज्ज्वालामणि हुं फट् स्वाहा शिरः । ओं विष्णुतेजोज्ज्वलज्ज्वालामणि हुं फट् स्वाहा शिखा । ओं रुद्रतेजोज्ज्वलज्ज्वालामणि हुं फट् स्वाहा कवचम् । ओं वह्नितेजोज्ज्वलज्ज्वालामणि हुं फट् स्वाहा नेत्रम् । ओं सर्वतेजोज्ज्वलज्ज्वालामणि हुं फट् स्वाहा अस्त्रम् ।

ध्यानम् -

**अरुणारुणपङ्कजे निषण्णः कमलेऽभीतिवरौ करैर्दधानः ।**
**स्वरुचाऽऽहितमण्डलस्त्रिणेत्रः रविराकल्पशताकुलोऽवताद्वः ।।**
ओं घृणिः सूर्य आदित्यः इति मन्त्रः ।।

अथ पूजाविधिः -

भुवनेश्वरीचतुरक्षरीविधानोक्त (अष्टपत्रं विलिख्य, तद्बहिः वृत्तत्रयं विलिख्य, तद्बहिः द्वादशराशिखण्डं विलिख्य, तद्बहिः चतुरश्रं विलिख्य, कर्णिकायां श्रीबीजं विलिख्य) सौरपीठं संपूज्य, तस्मिन्पीठे पुरश्चरणकलशं शुद्धाद्भिस्सम्पूर्य, रक्तवासोयुगेन संवेष्ट्य, दिनेशं संपूजयेत् ।

अङ्गैः प्रथमावृतिः । आदित्याय इति मध्ये पूजयेत् ।
रवये । भानवे । भास्कराय । सूर्याय । इति दिक्षु ।
उषायै । प्रज्ञायै । प्रभायै । सन्ध्यायै । इति विदिक्षु ।।
इति द्वितीयावृतिः ।

अक्षत-यव-कुश-दूर्वा-
तिल-सर्षप-कुसुम-चन्दनोपेतैः ।
प्रस्थग्राह्यच्छिद्रं
स्वैक्यं संभावयेत् समाहितधीः ॥

इष्ट्वा दिनेशमथ पीठगतं तथैव
व्योमस्थितं परिवृतावरणं विलोक्य ।
अष्टोत्तरशतमथ प्रजपेन्मनुं तं
पूर्णोदकं निजकरेण पिधाय पात्रम् ॥

भूयोऽभ्यर्च्य सुधामयं जलमथो त(स)द्गन्धपुष्पादिभिः
जानुभ्यामवनिं गतश्चषकमप्यामस्तकं प्रोद्धरन् ।
दद्यान्मण्डलबद्धदृष्टिहृदयो भक्त्यार्घ्यमोजोबल-
ज्योतिर्दीप्तियशोधृतिस्मृतिकरं लक्ष्मीप्रदं भास्वते ॥

अथ कृतपुष्पाञ्जलिरपि
पुनरष्टशतं प्रजपेन्मन्त्री ।
यावद्रश्मिषु भानोश्च
व्याप्नोत्यम्भः सुधामयं तदपि ॥

---

ओं ब्राह्म्यै । माहेश्वर्यै । कौमार्यै । वैष्णव्यै । वाराह्यै । इन्द्राण्यै । चामुण्डायै । इति आग्नेयीदिक्क्रमेण । अरुणाय नमः । इत्यग्रे । इति तृतीयावृतिः ॥

शशिने । बुधाय । बृहस्पतये । शुक्राय । इति दिक्षु ।

अङ्गारकाय । मन्दाय । राहवे । केतवे । इति आग्नेय्यादिषु । एतान् सूर्यपरिषदे (?) इत्यन्तत्वेन समर्चयेत् । एतैर्ग्रहैः चतुर्थ्यावृतिः ।

इन्द्राय सुराधिपतये सूर्यपारिषदाय नमः - इत्यादिभिः लोकेशैः पञ्चमी ॥

**अमृतमयजलावसिक्तगात्रो**

**दिनपतिरप्यमृतत्वमातनोति ।**

**सधन-विभव-दार पुत्रमित्रं**

**पशुगण जुष्टमनन्तभोगयोगि ।।**

**तस्मादिनाय दिनशो ददतां दिनादौ**

**दैन्यापनोदितनवे दिनवल्लभाय ।**

**अर्घ्यं समग्रविभवस्त्वथवार्कवारे**

**पारं स गच्छति भवाह्वयवारिराशेः ।।**

एवं जपन्निर्जितेन्द्रियो नीरुक् च भवति ।।

अथ सूर्यार्घ्यप्रदानप्रसङ्गात् चन्द्रमनुविधानं उच्यते -

अत्रि ऋषिः । पङ्क्तिश्छन्दः । सोमो देवता ।
सों बीजम् । आय शक्तिः ।।

सां हृत् । सीं शिरः । सूं शिखा । सैं कवचम् । सौं नेत्रम् । सं अस्त्रम् ।।

ध्यानम् -

**विमलकमलसंस्थः सुप्रसन्नाननेन्दुः**

**वरदकुमुदहस्तः चारुहारादिभूषः ।**

**स्फटिकरजतवर्णो वाञ्छितप्राप्तये वो**

**भवतु भवदभीष्टद्योतिताङ्गश्शशाङ्कः ।।**

सों सोमाय नमः इति मन्त्रः ।। सकारत्रयोदशस्वरबिन्दुभिः प्रथमं बीजम् । ऐश्वर्यप्रधानोऽयं मन्त्रः । षल्लक्षं जपेत् । पञ्चमी दशमी पञ्चदशीषु तु विशेषतः ।।

**अयुतं प्रजपेन्मन्त्रं सायाह्नेऽभ्यर्च्य भासितम् ।**
**पयोऽन्नेन हुनेत् भूयस्सघृतेन सहस्रकम् ।।**

अयमर्थः - उक्तदिनेषु अयुतं सायाह्ने जप्त्वा, सोमं संपूज्य, घृतसिक्तेन क्षीरान्नेन सहस्रं हुनेत् । पुरश्चरणकाले एवं कृत्वा षल्लक्षं पुरश्चर्य, पुनराज्यसिक्तेन पायसेन षट्सहस्रं हुनेत् ।।

अथ चन्द्रमनुविधानप्रसङ्गात् अग्निमन्त्रविधानमुच्यते -

भृगु ऋषिः । गायत्री छन्दः । अग्निर्देवता ।
अं (ओं) बीजम् । स्वाहा शक्तिः ।।

सहस्रार्चिषे नमः हृत् । स्वस्तिपूर्णाय शिरः । उत्तिष्ठ पुरुषाय नमः शिखा । धूमव्यापिने नमः कवचम् । सप्तजिह्वाय नमः नेत्रम् । धनुर्धराय नमः अस्त्रम् ।।

स्वाहान्तेन व्याहृतित्रितयेन द्विरावृत्त्या वा षडङ्गानि ।।

ध्यानम् -

**शक्तिस्वस्तिकपाशान्**
**साङ्कुशवरदाभयान् दधत्रिमुखः ।**
**मुकुटादिविधभूषो**
**ऽवताच्चिरं पावकः प्रसन्नो वः ।।**

ओं भूर्भुवस्स्वस्स्वाहा इति सप्तार्णोऽयं मन्त्रः । ऐश्वर्यप्रधानोऽयं मन्त्रः । षल्लक्षं जपः ।।

अथ अग्निमन्त्रप्रसङ्गात् स्वशरीरदिषु दग्धेषु सत्सु तच्छान्त्यर्थं मन्त्र उच्यते -

**यद्यस्ति शाम्भवी विद्या यदि धर्मस्सनातनः ।**
**यदि मे भक्तिर्भरिता शीतो भव हुताशन ।।**

यत्र कुत्रचित् दग्धं च शीतो(तं) भवेत् ।।

अथ अग्निमन्त्रप्रसङ्गात् मन्मथविधानमुच्यते ।। सम्मोहन ऋषिः । गायत्री छन्दः । मनोभवो देवता । इं बीजम् । ईं शक्तिः ।।

क्लां हृत् । क्लीं शिरः । इत्याद्यङ्गानि ।

ध्यानम् -

**अरुणमरुणवासोमाल्यदामाङ्गरागं**
**स्वकरकलितपाशं साङ्कुशास्त्रेक्षुचापम् ।**
**मणिमयमकुटाद्यैर्दीप्तमाकल्पजातैः**
**अरुणनलिनसंस्थं चिन्तयेदङ्गयोनिम् ।।**

क्लीं इति मन्त्रः । वश्यैश्वर्यप्रधानोऽयं मन्त्रः । तरणिलक्षजपः । तरणिः आदित्यः । (द्वादशलक्षं जपेत् )

अथ गोपालसाम्यात् सन्तानगोपालमन्त्रो लिख्यते -

नारद ऋषिः । अनुष्टुप् छन्दः । श्रीकृष्णो देवता ।
ग्लौं बीजम् । नमः शक्तिः । पुत्रार्थे विनियोगः ।।

देवकीसुत गोविन्द हृत् । वासुदेव जगत्पत् शिरः । देहि मे तनयं कृष्ण शिखा । त्वामहं शरणं गतः कवचम् । ओं नमः अस्त्रम् ।।

ध्यानम् -

**वैकुण्ठादागतं कृष्णं रथस्थं करुणानिधिम् ।**
**किरीटिसारथिं पुत्रानानयन्तं परात्परम् ।।**

**आदाय तान् रथस्थांश्च गुरवे वैदिकाय च ।**
**अर्पयन्तं महाभागं ध्यायेत् पुत्रार्थमच्युतम् ।।**

ओं श्रीं ह्रीं क्लीं ग्लौं देवकीसुत गोविन्द वासुदेव जगत्पते । देहि मे तनयं कृष्ण त्वामहं शरणं गतः इति मन्त्रः ।।

अथ सन्तानगोपालमन्त्रप्रसङ्गात् सीताराममन्त्रो लिख्यते -

सुयज्ञ ऋषिः । जगती छन्दः । सीतारामो देवता ।
श्रीं बीजम् । स्वाहा शक्तिः ।।

ओं क्लीं हृत् । श्रीं श्रीं शिरः । रां रामाय नमः शिखा । श्रीं सीतायै स्वाहा कवचम् । रां श्रीं श्रीं नेत्रम् । क्लीं ओं अस्त्रम् ।।

ध्यानम् -

**तप्ताष्टापदभां विदेहतनयां रामाङ्कपीठस्थितां**
**तद्वक्त्रेक्षणतत्परामनिमिषां हस्तस्थिताब्जोत्पलाम् ।**
**रामं दाशरथिं [1]रमाकुचलसद्धस्तं तदास्येक्षणं**
**कस्तूरीरचितस्वदक्षिणकरं ध्यायेदभीष्टाप्तये ।।**

**प्रणवं मान्मथं बीजं लक्ष्मीबीजद्वयं तथा ।**
**राममन्त्रषडर्णं च सीतामन्त्रषडक्षरान् ।।**

**अग्निबीजं ततः पश्चात् रमाबीजद्वयं तथा ।**
**कामबीजं ततः पश्चात् प्रणवं [2]सम्पुटक्रमात् ।**
**सीताराममहामन्त्रं जपेद्वाञ्छितमाप्नुयात् ।।**

ओं क्लीं श्रीं श्रीं रां रामाय नमः श्रीं सीतायै स्वाहा रां श्रीं श्रीं क्लीं ओं इति मन्त्रः ।। एकविंशतिवर्णोऽयं भुक्तिमुक्तिप्रदो नृणाम् ।।

षडक्षरोक्तवत् जपपूजादिकम् ।।

अथ ऐन्द्रत्रिष्टुप् चिन्तामण्याख्यो मन्त्रसारोक्तोऽत्र योग्यतावशात् लिख्यते -

गृत्समद ऋषिः । त्रिष्टुप् छन्दः । इन्द्रो देवता । लामित्यादि न्यासः ।।

---

1 समीरजनुतं सीतास्यदत्तेक्षणम् ।    2. च पुटक्रमात् इति ख मातृकायाम् ।

ध्यानम् -

**मातङ्गारातिपीठे स्थितमतिरुचिरे नन्दने कल्पवृक्षैः**
**मन्दाराद्यैर्मनोज्ञैर्विबुधमुनिनुतं तप्तकार्तस्वराभम् ।**
**हस्तोद्यत्स्वर्णकुम्भप्रकरपरिगलद्रत्नधाराप्रवाहान्**
**वर्षन्तं वाञ्छितार्थप्रदममरपतिं सुप्रसन्नं नमामि ।।**

लं इति मन्त्रः । ऐश्वर्यप्रधानोऽयं मन्त्रः । लक्षं जपेत् ।।

अथ मुक्तिप्रदत्वसामान्येन नामत्रयमपि कल्पान्तरोक्तमत्र योग्यतावशात् लिख्यते -

पराशर-व्यास-नारदा ऋषियः । विराट् छन्दः । परब्रह्म देवता ।

अच्युताय नमः । अनन्ताय नमः । गोविन्दाय नमः ।। इति मन्त्रः ।।

अथवा -

अच्युतायानन्तायगोविन्दाय नमः । इति मन्त्रः ।। मोक्षप्रधानोऽयं मन्त्रः ।। अस्मिन्पक्षे, शौनक ऋषिः । छन्दो देवते तुल्ये[1] ।

अच्युताय नमः हृत् । अनन्ताय नमः शिरः । गोविन्दाय नमः शिखा । अच्युताय नमः कवचम् । अनन्ताय नमः नेत्रम् । गोविन्दाय नमः अस्त्रम् ।।

ध्यानम् -

**शङ्खचक्रधरं देवं चतुर्बाहुं किरीटिनम् ।**
**सर्वायुधैरुपेतं च गरुडोपरि संस्थितम् ।।**

**सनकादि मुनिन्द्रैश्च सर्वदेवैरुपासितम् ।**
**श्रीभूमिसहितं देवमुदयादित्यसन्निभम् ।।**

---

1. विराट् छन्दः । 2. परब्रह्म देवता इति ज्ञेयम् ।।

प्रातरुद्यत्सहस्रांशु-मण्डलोपमकुण्डलम् ।
सर्वलोकस्य रक्षार्थमनन्तं नित्यमेव तु ।।

अनन्तवरदानं च प्रयच्छन्तं मुदान्वितम् ।
एवं ध्यात्वा हरिं नित्यं परब्रह्मस्वरूपिणम् ।।

प्रातर्मध्यन्दिने चैव सायाह्ने च विशेषतः ।
अर्चयेद्देवदेवेशं गन्धपुष्पजलादिभिः ।।

अथ सुदर्शनविधानमुच्यते -

अहिर्बुध्न्य ऋषिः । अनुष्टुष् छन्दः । श्रीसुदर्शन महाविष्णुर्देवता । रं बीजम् । हुं शक्तिः ।।

आचक्राय स्वाहा हृत् । विचक्राय स्वाहा शिरः । सुचक्राय स्वाहा शिखा । धीचक्राय स्वाहा कवचम् । संचक्राय स्वाहा नेत्रम् । ज्वालाचक्राय स्वाहा अस्त्रम् ।।

पुनः -

ऐन्द्रीं दिशं सुदर्शनेन बध्नामि नमः चक्राय स्वाहा - इति पूर्वदिग्बन्धः । आग्नेयीं दिशं चक्रेण बध्नामि इत्यादि, अधोदिशं चक्रेण बध्नामि नमः चक्राय स्वाहा इति (इत्यन्तं) बन्धनं कुर्यात् ।

अथवा - "ऐन्द्रीं दिशं समारभ्य दिशस्त्वधस्तादन्तं" इत्यारभ्य, "शीर्ष च दिशां प्रबन्धः"[1] इत्यत्र, दिग्बन्धनमन्त्रोद्धारे च शब्दनिर्देशात् दिग्बन्धमन्त्रस्य स्वाहान्ते "अस्त्राय फट्" इति सर्वास्वपि दिक्षु संयोज्य दिग्बन्धनं कुर्यात् ।

---

1. ऐन्द्रीं समारभ्य दिशस्त्वधस्तादन्तं समुक्त्वा क्रमशो दशानाम् । चक्रेण बध्नामि नमस्तथोक्त्वा चक्राय शीर्ष च दिशां प्रबन्धः ।। इति श्लोकः ।।

अस्मिन्पक्षे अस्त्यत्रोपदेशः । कथं ?

पूर्वोक्तप्रकारेण 'आचक्राय स्वाहा' इत्याद्यङ्गं नेत्रान्तं कृत्वा, तत्रैव अस्त्रस्थानेषु, 'ऐन्द्रीं दिशं चक्रेण बध्नामि नमो ज्वालाचक्राय स्वाहा अस्त्राय फट्' । एवं आग्नेयादिष्वपि । एवं दिग्बन्धनमन्त्रस्यान्ते, 'अस्त्राय फट्' इति संयोज्य, अङ्गषष्ठं दशदिग्बन्धनरूपेण कुर्यात् इति ।। पुनः,

ओं त्रैलोक्यं रक्ष रक्ष हुं फट् स्वाहा । - अनेन अग्निप्राकारमन्त्रेण परितो अग्निप्राकारं भावयेत् ।।

अस्य मन्त्रस्य अक्षरन्यास उच्यते -

**तारं तु मूर्ध्न्यथ सितारुणकृष्णवर्णं**
**मध्ये भ्रुवोश्च समथो वदने हकारम् ।**
**हृद्गुह्यजानुपदसन्धिषु चावशिष्टान्**
**वर्णान् न्यसेदिति तनौ पुनरग्निवर्णान् ।।**

अस्यार्थः - अकारउकारमकाराणां सन्धिः किल प्रणवः । तेन सितारुणकृष्णवर्णत्रयस्वरूपं तारं शिरसि न्यसेत् । पुनः सकारादिवर्णान् अग्निवर्णान् ध्यात्वा भ्रूमध्यादिषु स्थानेषु न्यसेत् ।। इति ।।

**अव्याद्भास्करसन्निभाभिरखिलाभाभिर्दिशो भासयन्**
**भीमाक्षः क्षरदट्टहासविकसद्दंष्ट्राप्रदीप्ताननः**
**दोर्भिश्चक्रदरौ गदाब्जमुसलत्रासांश्च पाशाङ्कुशौ**
**बिभ्रत्पिङ्गशिरोरुहोऽथ [2]भवतः चक्राभिधानो हरिः ।।**

- ओं सहस्रार हुं फट् इति मन्त्रः । रक्षाप्रधानोऽयं मन्त्रः द्वादशलक्षजपः ।।

---

1. स्फुरदिति पाठान्तरमपि । 2. भगवानिति चान्यः पाठः ।।

अथ सुदर्शनयन्त्रे चोरग्रह-रिपु-भयध्वंसि-चोर-निवृत्तिफलोक्ति-प्रसङ्गात् चोरनिवृत्त्यादि प्रयोजनकः कार्तवीर्यमन्त्रोऽपि मन्त्रसारोक्तो योग्यतावशात् अत्र लिख्यते -

दत्तात्रेय ऋषिः । अनुष्टुप् छन्दः । श्रीकार्तवीर्यार्जुनो देवता । कृतवीर्यसुतः हृत् । राजा शिरः । सहस्रभुजमण्डनः शिखा । अवतीर्णः कवचम् । हरिस्साक्षात् नेत्रम् । पालयेत्सकलं मम अस्त्रम् ।।

ध्यानम् -

**बाहासाहस्रराजद्बहुलतरशिखोद्दामकल्पान्तवह्नि-**
**क्रूराकारप्रदीपाङ्कुशकलितमहाध्वान्तदन्तावलेन्द्रम् ।**
**क्रूरं क्रूराट्टहासाकुलविधृत मृगस्तेनवेतालभूत-**
**व्यालाद्यं स्यन्दनस्थं विबुधमुनिनुतं कार्तवीर्यं नमामि ।।**

कृतवीर्यसुतो राजा सहस्रभुजमण्डनः[1] ।
[2]अवतीर्णो हरिस्साक्षात् पालयेत्सकलं मम ।।

इति द्वात्रिंशदर्णोऽयं मन्त्रः । नष्टद्रव्याकर्षणप्रधानोऽयं मन्त्रः ।।

**ध्यानमात्रेण रक्षा स्यात्सुमहत्सु भयेष्वपि ।**
**चौरैर्हृतं तथा द्रव्यं सद्यो याति प्रकाशताम् ।।**

लक्ष जपः । रक्तकमलैः त्रिमधुरसिक्तैः दशांशं पुरश्चरणहोमः ।।

अथ कार्तवीर्यार्जुनमन्त्रप्रसङ्गात् श्रीकराष्टाक्षरविधानमुच्यते -

वामदेव ऋषिः । पङ्क्तिश्छन्दः । हरिर्देवता ।
भीषय भीषय हुं हृत् । त्रासय त्रासय हुं शिरः ।।

---

1. मण्डलः इति ख. मातृकायाम् ।
2. अवतारो हरेः इति पाठान्तरम् ।

प्रमर्दय प्रमर्दय हुं शिखा । प्रध्वंसय प्रध्वंसय हुं कवचम् । रक्ष रक्ष हुं अस्त्रग् ।।

अक्षरन्यासः -

मूर्धाक्षिकण्ठहृतयोदरसोरुजङ्घा-
पादद्वयेषु लिपिशो न्यसतु स्वदेहे ।
विप्रादिकान् मुखकरोरुपदेषु वर्णान्
चक्रादिकानपि करेषु ततस्तदस्त्रात् ।।

अस्यार्थः - पूर्वं मूर्धाक्षीत्याद्युक्तस्थानेषु अष्टौ वर्णान् क्रमेण न्यरत्वा, पुनः (विप्रादिकानित्यस्यायमर्थः) उं ब्राह्मणेभ्यो नगः । तिं क्षत्रियेभ्यो नमः । ष्ठं वैश्येभ्यो नमः । श्रीं शूद्रेभ्ये नगः । इति, मुखकरोरुपदेषु ।। कं चक्राय नमः । रं शङ्खाय नमः । खां गदायै नमः । हां पद्माय नमः । इति, चतुर्भुजं आत्मानं ध्यात्वा, तत्तत्करेषु न्यसेत् इति ।।

ध्यानम् -

दुग्धाब्धिद्वीपवर्यप्रवलसितसरोद्यानकपल्द्रुमाधो
भद्राम्भोजन्मपीठोपरिगतविनतानन्दनस्कन्धसंस्थः ।
दोर्भिर्बिभ्रद्रथाङ्गं सदरमथ गदापङ्कजे स्वर्णवर्णो
भास्वन्मौलिर्विचित्राभरणपरिगतः स्याच्छ्रियै वो मुकुन्दः ।।

उत्तिष्ठ श्रीकर स्वाहा इति मन्त्रः ।। ऐश्वर्यप्रधानोऽयं मन्त्रः । अष्टलक्षजपः ।

श्रीदुग्धवृक्षोत्थसमिद्भिरब्जैः ।
साज्येन दौग्धेन च सर्पिषा च ।।

साज्येन दौग्धेनेति आज्यसिक्तेन क्षीरान्नेनेत्यर्थः । श्रीवृक्षं बिल्वम् । एतैरष्टद्रव्यैर्दशांशं पुरश्चरणहोमः ।।

---

1. विल्व-अश्वत्थ-उदुम्बर-प्लक्ष-वट-समिद्भिः अरुणाम्बुजैः पयोन्नैः सर्पिषा च ।।

अथ श्रीकराष्टाक्षरमन्त्रप्रसङ्गात् वराहमन्त्रविधानमुच्यते -

भार्गव ऋषिः । अनुष्टुपु छन्दः । श्रीवराहो देवता ।। हुं बीजम् । स्वाहा शक्तिः ।। एकशृंगाय हृत् । व्योमोत्काय शिरः । तेजोधिपतये शिखा । विश्वरूपाय कवचम् । महादंष्ट्राय अस्त्रम् ।।

अथवा, मन्त्रवर्णैरेवाङ्गानि कुर्यात् ।

ओं नमो भगवते हृत् । वराहरूपाय शिरः । भूर्भुवस्स्वःपतये शिखा । भूपतित्वं मे कवचम् । देहि मे दापय स्वाहा अस्त्रम् ।।

ध्यानम् -

**जानोरापादमुद्यत्कनकमिव हिमप्रख्यमाजानुनाभेः**
**कण्ठादानाभि वह्निप्रमथ शिरसश्चागलं नीलवर्णम् ।**
**मौलेर्व्योमाभमाङ्कं करलसदरिशङ्खासिखेटं गदाख्या-**
**शक्तीष्टाभीतियुक्तं प्रणमत वसुधोल्लासिदंष्ट्रं वराहम् ।।**

ध्यानान्तरम् -

**सजलाम्बुवाहनिभमुद्यतदोःपरिघं**
**धराधरसमानतनुम् ।**
**सितदंष्ट्रिकाधृतभुवं त्वथवा**
**प्रविचिन्तयेत्सपदि कोलममुम् ।।**

ध्यानान्तरम् -

**हेमप्रख्यं पार्थिव मण्डले वा**
**नीहाराभं नीरजेऽग्नेस्तदाभम् ।**
**वायोः कृष्णं द्युप्रभं वा दिविस्थं(ष्ठं)**
**क्रोडं व्याप्तं सत्यसंस्थं यजेद्वा ।।**

अस्यार्थः - पार्थिवमण्डलं चतुरश्रम् । तस्मिन् वराहमूर्ति स्वर्णभारूपं वा ध्यायेत् । आप्ये अर्धचन्द्राकारे हिमाभं वा वराहं ध्यायेत् ।

अग्नेर्मण्डले त्रिकोणे अग्न्याभं वा ध्यायेत् । वायोर्मण्डले षट्कोणे कृष्णवर्णं वा ध्यायेत् । आकाशमण्डले वृत्ताकारे द्युप्रभं वा ध्यायेत् ।। इति ।।

ओं नमो भगवते वराहरूपाय भूर्भुवस्स्वःपतये भूपतित्वं मे देहि ददापय[1] स्वाहा इति मन्त्रः ।। लक्षजपः । त्रिमधुरसित्तैः पद्मैः दशांशं पुरश्चरणहोमः । घृतमधु-गुडमिश्रं त्रिमधुरसंज्ञं भवति ।।

अथ वराहमन्त्रविधानप्रसङ्गात् विष्णुपञ्जरविधानमुच्यते -

बृहस्पति ऋषिः । अनुष्टुप् त्रिष्टुभौ छन्दसी । विश्वरूप-विष्णुर्देवता ।। ओं बीजं । नमः शक्तिः ।।

ओं ओं स्थाने हृषीकेश तव प्रकीर्त्या सह हृत् । नमो जगत्प्रहृष्यत्यनुरज्यते च स्त्रार शिरः । नारा रक्षांसि भीतानि दिशो द्रवन्ति हुं फट् शिखा । यणा सर्वे नमस्यन्ति च सिद्धसङ्घाः य ओं कवचम् । एतैः समस्तैररस्त्रम् ।।

मूलमन्त्रः - ओं ओं स्थाने हृषीकेश तव प्रकीर्त्या सह नमो जगत्प्रहृष्यत्यनुरज्यते च स्त्रार नारा रक्षांसि भीतानि दिशो द्रवन्ति हुं फट् यणा सर्वे नमस्यन्ति च सिद्धसङ्घाः य ओं ।। रक्षाप्रधानोऽयं मन्त्रः ।।

अस्य मन्त्रस्य जपसमये ध्यानमुच्यते -

**अर्केन्दुवह्निनिलयस्फुरितत्रिमन्त्र-**
**शक्तिप्रवद्धमहसः परमस्य विष्णोः ।**
**पादारविन्दगलितामृतसिक्तगात्रं**
**साध्यं स्मरेज्जपविधावपि साधकेशः ।।**

---

1. भूपतित्वं मे देहि दापय-इत्येव माव्यम् । अङ्गन्यासेऽपिदृशमेव सूचितम ।।

विष्णोस्सान्निध्यलब्धोल्लसितबलचलद्धस्तदण्डोद्यतास्त्रैः
चक्राद्यैर्भीषणास्येक्षणचरणवचोहासहुङ्कारघोरैः ।
उत्क्षिप्तक्षिप्तकृत्तस्फुटितविदलिताचूर्णितध्वस्तशान्तान्
धायेद्वेतालभूतग्रहदुरितपिशाचारिनागादिरोगान् ।।

एतत् वेतालपीडदो ध्येयम् ।।

अथ विष्णुपञ्जरविधानप्रसङ्गात् हयग्रीवैकाक्षरमन्त्रो लिख्यते -

ब्रह्मा ऋषिः । त्रिष्टुप् छन्दः । हयग्रीवो देवता ।।
हकारो बीजम् । उकारः शक्तिः ।।
वागैश्वर्यसिद्ध्यर्थे जपे विनियोगः ।।

ह्सां हृत् । ह्सीं शिरः । ह्सूं शिखा । ह्सैं कवचम् ।
इत्यादिभिः षडङ्गम् ।।

ध्यानम् -

धवलनलिननिष्ठं क्षीरगौरं कराग्रैः
जपवलयसरोजे पुस्तकाभीतिदाने ।
दधतममलवस्त्राकल्पजालाभिरामं
तुरगवदनविष्णुं नौम्यविद्याग्रसिष्णुम् ।।

हकारसकारचतुर्दशषष्ठस्वरान्यतरयुक्तबिन्द्वात्मकः ह्सौं इति मन्त्रः ।
अथवा, ह्सूं इति मन्त्रः ।।

।। इति श्रीमहाराज तुलजेन्द्रविरचिते मन्त्रशास्त्रसङ्ग्रहे वैष्णवप्रकरणं नाम तृतीयोऽध्यायः ।।

## ।। चतुर्थोऽध्यायः ।।

अथ स्वयंवरामन्त्रविधानं लिख्यते -

ब्रह्मा ऋषिः । देवी गायत्री छन्दः । जगन्माता श्रीपार्वती देवता ।।

त्रैलोक्यवश्यमोहिनी हृत् । जगत्-त्रयवश्यमोहिनी शिरः । उरगवश्यमोहिनी शिखा । राजवश्यमोहिनी कवचम् । स्त्रीपुरुष-वशङ्करी नेत्रत्रयम् । सर्वस्त्रीपुरुषमुखहृदयं मम वशं कुरु कुरु स्वाहा अस्त्रम् । अथवा, ह्लां हृत् । ह्लीं शिरः इत्यादि षडङ्गं कुर्यात् ।

ध्यानम् -

**वालार्कायुतसुप्रभां करतले रोलम्बमालाकुलां**
**मालां सन्दधतीं मनोहरतनुं मन्दस्मितोद्यन्मुखीम् ।**
**मन्दं मन्दमुपेयुषीं वरयितुं शम्भुं जगन्मोहनं**
**वन्दे देवमुनीन्द्रवन्दितपदामिष्टार्थदां पार्वतीम् ।।**

ह्लीं योगिनि योगिनि योगेश्वरि योगभयङ्करि सकलस्थावरजङ्गमस्य मुखहृदयं मम वशनाकर्षयाकर्षय स्वाहा ।। इति मन्त्रः ।। वश्यप्रधानोऽयं मन्त्रः पञ्चचत्वारिंशदर्णः ।।

**शीर्षालिकश्रुतिविलोचनघोणगण्ड-**
**दन्तोष्ठदोश्चरणसावधिसन्धिकेषु ।**
**आधारपार्श्वहृदयस्तनकक्षसांस-**
**शीर्षेषु विन्यसतु मन्त्रवरस्य वर्णान् ।।**

तत्र दोश्चरणेति दोश्चरणयोः साग्रनाभ्यन्यपार्शवके ।

**शीर्षदक्षकपोलांसे पार्श्वनाभ्यन्यपार्श्वके ।**
**अंसतालुशिरोवक्त्रपृष्ठहृस्तु पदानि च ।।**

एवं पदन्यासं च कुर्यात् ।। पुनः 'ज्ञौ चापाय नमः' इति भ्रुवोर्न्यसेत् । 'ज्यां ज्यायै नमः इति नेत्रयोरधः । द्रां द्राविण्यै नमः । द्रीं

क्षोभिण्यै नमः । क्लीं वशीकरिण्यै नमः । ब्लूं अक्षिण्यै नमः । सः सम्मोहिन्यै नमः । एतास्तु बाणपञ्चकदेवताः नेत्रघ्रोणेत्यादि वक्ष्यमाण-स्थानेषु न्यसेत् । पुनः एतासां देवतानां आयुधवर्णा उच्यन्ते ।।

**पुष्पबाणेक्षुकोदण्डपाशाङ्कुशलसत्कराः ।**
**रक्ता रक्ताम्बरालोपाः सुप्रसन्नाननाम्बुजाः ।।**

**व्याख्यानरूपशीलाश्च प्रमदा मदविह्वलाः ।**
**सबाणशिरसो ध्येयाः कामदा बाणदेवताः ।।**

एवं न्यस्त्वा लक्षत्रयं जपेत् । त्रिमधुरसिक्तैः पङ्कजैर्वा आज्यसिक्तैः क्षीरपायसैर्वा तत्सिक्तैरुत्पलैर्वा दशांशं पुरश्चरणहोमः ।

अथ पूजाविधिः -

जयायै (नमः) । विजयायै । अजितायै । अपराजितायै । नित्यायै । विलासिन्यै । दोग्ध्र्यै । अघोरायै । मङ्गलायै । इत्यष्टदलेषु अष्टशक्ती नवमीं कर्णिकायां च सम्पूज्य, अस्मिन्शाक्ते पीठे स्वयंवरामूर्तिं समावाह्य समर्चयेत् ।

अङ्गैः प्रथमावृतिः ।।

सुभगायै (नमः) । भगायै । भगसर्पिण्यै । भगमालिन्यै । अनङ्गायै । अनङ्गकुसुमायै । अनङ्गमेखलायै । अनङ्गमदनायै । इति द्वितीयावृतिः ।।

पञ्चबाणमन्त्रैः वक्ष्यमाणैः तृतीया ।।

मातृभिश्चतुर्थी ।।

त्रिपुराविधानोक्ताष्टभैरवैः पञ्चमी ।

इन्द्रादिभिः षष्ठी । वज्रादिभिस्सप्तमी । एवं सम्पूज्य पुरश्चर्य प्रयोगान्कुर्यात् ।।

अथ प्रयोगः -

**एवं प्रपूज्याथ जुहोतु वह्नौ बन्धूकपुष्पैरयुतं नरो यः ।**
**त्रिस्वादुयुक्तैर्नियमेन भक्त्या कुर्यात् त्रिलोकीं नचिराद्वशेऽसौ ।।**

अयमर्थः - बन्धूकपुष्पैः त्रिमधुरसिक्तैः अयुतं जुहुयात् त्रैलोक्यवश्यार्थम् ।

प्रयोगान्तरम् -

**पाटीरपङ्कलुलितैः बकुळप्रसूनैः**
**अष्टोत्तरं दशशतं प्रजुहोति योऽसौ ।**
**षण्मासतः स विपुलां समवाप्य लक्ष्मीं**
**नारीनरक्षितिपतीन्स्ववशे विदध्यात् ।।**

अयमर्थः - पाटीरपङ्कसिक्तैः वकुळपुष्पैः अष्टोत्तरसहस्रं जुहुयान्नित्यशः । एवं षण्मासे कृते लक्ष्मीः सर्ववश्यं च भवति ।।

प्रयोगान्तरम् -

**पारन्तीसुमनोभि-**
**स्स्वादुयुताभिर्हुतक्रिया नचिरात् ।**
**लक्ष्मीकरी नराणां**
**सैव स्याल्लोकरञ्जनी चोक्ता ।।**

अयमर्थः - अनेन कुसुमेन त्रिमधुरसिक्तेन 'सङ्ख्यानुक्ते सहस्र'मिति न्यायात् सहस्रं हुनेत् । उक्तफलं भवति ।।

प्रयोगान्तरम् -

**ससितेन घृतेन च यो हवनं**
**वितनोत्यनले सुसमिद्धतरे ।**
**अयुतं परमां समवाप्य रमां**
**जगतां त्रितयं कुरुते स वशे ।।**

सिता सर्करा ।। अयमर्थः - सितालुलितेनाज्येन अयुतं जुहुयात् । उक्तफलं भवति ।

प्रयोगान्तरम् -

सुधालतोत्थैरयुतं सुशुद्धैः
खण्डैर्दिनादौ मधुरत्रयाक्तैः ।
जुहोति वह्नावभिवाह्य देवीं
जरापमृत्युग्रहरोगशान्त्यै ।।

अयमर्थः - सुधाखण्डैः त्रिमधुरसिक्तैरयुतं जुहुयात् । उक्तफलं भवति ।।

प्रयोगान्तरम् -

जातिप्रसूनैर्विकसत्पलाशैः
पाटीरपङ्कस्नपितैस्सहस्राम् ।
सन्ध्यां तृतीयां समुपास्य पश्चात्
जुहोतु वह्नावनुरञ्जनाय ।।

अयमर्थः - जातीपुष्पैः पाटिरपङ्कसिक्तैः सायं सन्ध्यायां जुहुयात् । उक्तफलं भवति ।

अथ प्रातःकालीनध्यानम् -

हेमाभामतिवांगतीतगुणशीलान्ताम(दिव्य) शिल्पाकृतिं
प्रेमारोहमनोहरां करलसत्कल्याणदामान्विताम् ।
श्यामामीश्वरमुद्यतां वरयितुं त्रैलोक्यसम्मोहिनीं
कामापादनकल्पवल्लिमनिशं वन्दे परां देवताम् ।।

प्रातःकाले जगद्वश्यां ध्यायेत्सर्वसमृद्धिदाम् ।
मध्याह्नकालीनध्यानं बालार्केत्यादि उक्तम् ।।

सायङ्कालीनध्यानम् -

विधृतवरणमाल्या सर्वरत्नाङ्गभूषा
निखिलनयनचेतोहारिरूपाग्र्यवेषा ।
भवतु भवदभीष्टप्राप्तये शैलकन्या
पुरुषयुवतिवश्याकृष्टिनित्यप्रहर्षा ।।

दीक्षापूर्वं गुरुवरमुखात्प्राप्य सत्संप्रदायात्
विद्यामेतां विमलचरितस्तन्नियोगक्रमेण ।
जप्त्वा हुत्वा विधिवदभिवाह्यार्चयित्वा तथैवं
योगान्युञ्ज्याद्भुवनवशताकृष्टिसङ्क्षोभदक्षान् ।।

नद्यास्तीरे सुविमलमरुल्लोलरम्ये तदन्ते
यद्वा दुर्गाभवनमहिते नीलकण्ठालये वा ।
शुद्धे यद्वा भवनकुहरे विष्टरं न्यस्य तस्मिन्
बध्वा पद्मासनमथ ततस्स्वस्तिकं वाऽऽसनाग्र्यम् ।।

स्थित्वैवं शोषणाद्यैरमलतनुरथाधारतो विद्युदाभा-
मुद्गच्छन्तीं सुषुम्नामुखचरणपरां सार्धसोमप्रभां ताम् ।
पीयूषाम्बुप्रवाहं मनुमयमनिशं स्नापयन्तीं निजाङ्गे
ध्यायेन्मुच्येत वैरूप्यकदुरितविषक्षोभदारिद्र्यरोगैः ।।

आधारोद्यच्छिखिपुटगतो वेष्टितो मातृकार्णैः
सौषुम्नाध्वाचरणनिपुणो वाग्भवाद्यश्च मन्त्रः ।
सोऽयं ध्यातो वदनकुहरान्निस्सरन्नाशु दद्यात्
वागैश्वर्यं विबुधतटिनीलोलकल्लोलरम्यम् ।।

हृत्पद्मस्थखरांशुमण्डललसद्योन्यन्तरालस्थितं
मन्त्रं मारपुरस्सरं नवजपाशोणं धिया भावयेत् ।
योऽमुं धान्यधरा सुवर्णविभवैः सम्प्रीणयेदिन्दिरा
किञ्चासौ भुवनत्रयं निजवशे कुर्यादवश्यं नरः ।।

षड्द्वन्द्वान्तगपद्ममध्यविलसद्वालार्कबिम्बस्फुर-
    द्योनिस्थं कमलादिको मनुरयं कौसुम्भपुष्पारुणः ।
ध्यातो मन्त्रविदामनर्घविभवस्तोमादिभूतालका-
    नाथैश्वर्यविनिन्दिनीमनुपमां लक्ष्मीं चिरायार्पयेत् ।।

मार्ताण्डमण्डलास्थां
    मौलीन्दुगळत्सुधार्द्रतनुलतिकाम् ।
मिहिरमृगाङ्कमरुन्मुख-
    नेत्रां मुकुरोपमानगण्डलताम् ।।

मञ्जिष्ठाधरविलस-
    न्मन्दस्मितचन्द्रिकां मनोज्ञमुखीम् ।
मत्तेन्द्रकुम्भिकुम्भ-
    प्रोन्नतकुचकुम्भखिन्नमध्यलताम् ।।

मन्मथरथपृथुजघनां
    मुनिमुख्याराध्यमानपदकमलाम् ।
मणिमयमञ्जीराङ्गद-
    काञ्चीग्रैवेयकनकमकुटाढ्याम् ।।

काश्मीरकर्दमनिभां
    करधृतरत्नाभिपूर्णकनकघटाम् ।
सञ्चिन्त्यैवं देवीं
    मसुसङ्ख्यं मन्त्रमेनमथ जप्त्वा ।।

अमृताम्बुराविण्या
    विलोकयन्तीं निजाननं दृष्ट्वा ।
स्मृत्वा हिमगिरितनयां
    षोडशसङ्ख्यं प्रजप्य भूयश्च ।।

आराध्य पादपीठात्

तस्याः सङ्कल्प्य रजतसोपानम् ।

स्वाङ्गावधिमनुमेनं

द्वात्रिंशत्सङ्ख्यकं प्रजप्य ततः ॥

स्मृत्वा परिवारयुतां

मार्गेणानेन मन्दमवतीर्य ।

तिष्ठन्तीं निजपुरतो

ध्यात्वा चाष्टोत्तरं शतं जप्त्वा ॥

रत्नघटाननिर्य-

त्सुबहुलरत्नाम्बुधारया गौरीम् ।

अभिषिच्य पूरयन्तीं

निजतनुमनुचिन्त्य यो मनुं जप्यात् ॥

अष्टोत्तरं सहस्रं

मनुवरमेनं महत्तरा नचिरात् ।

सम्प्राप्नुयान्मनोज्ञा

धनधान्यसमृद्धिसङ्कुला लक्ष्मीः ॥

पुनस्साध्यं मन्त्री शिवतनुममुं मारविवशं

निजां मूर्तिं तद्वद्गिरिवरसुतामुज्ज्वलतनुम् ।

शिवौ मारार्ताङ्गावभिमिलितदेहौ स्मरयति

यमुद्दिश्यासौ नो भवति नचिरादेव वशगः ॥

साध्यं शिवातनुममुं नवनीतरूपं

लीनं निजे शिवतनावनलस्वरूपे ।

सञ्चिन्त्य साध्यमनुना शयनासनाद्यं

नित्यं करोतु मतिमाननुरञ्जनाय ॥

स्वस्मै क्रुद्धं नरममलधीश्शम्भुरूपं भवानी-
विश्लेषार्तं निजतनुमुमां तद्वदत्यन्तहृद्याम् ।
क्रोधध्वान्तैः प्रणयमधुरैः क्षोभयन्तीमपाङ्गैः
ध्यायेद्योऽसो स खलु निखिलं तिष्ठते कर्तुमिष्टम् ।।

ततो वासगेहे प्रदीपाङ्कुशाग्र
प्रहारद्रुतध्वान्तदन्तालवलेन्द्रे ।
विविक्ते वितानप्रसूनाम्बराद्यैः
मनोज्ञो सुवेषः प्रविश्यात्र मन्त्री ।।

स तुङ्गोपधानां समास्तीर्य शय्यां
स्थितोऽस्यां निशीथे सितप्रच्छदायाम् ।
सपाशाङ्कुशामिक्षुचापं तथेषून्
कराब्जैर्दधानां कुसुम्भाभवर्णाम् ।।

सुरक्ताम्बरालेपभूषां त्रिणेत्रां
भवानीं सुसाध्यां विचिन्त्य स्वयं च ।
भवात्माथ पाशाङ्कुशाद्यं च मन्त्रं
जपन्वर्णसङ्ख्यं निजाङ्केऽग्निरूपे ।।

सुधारूपदेहां विलीनां शितात्मा (?)
विचिन्त्याष्टयुक्तं सहस्रं जपेद्यः ।
असावुर्वशीमप्यमर्त्यालयो द्राक्
समाकर्षयेत्किंपुनर्मर्त्यनारीम् ।।

मदनमन्दिररन्ध्रमुखस्फुर-
न्मदनगं मनुमिन्दुनिभं स्मरन् ।
ज्वलनरूपनिजाङ्गुळिघट्टनैः
निजहितां वितनोतु वशेऽवशाम् ।।

अथ यन्त्रश्लोकः -

ससाध्यां हृल्लेखां प्रथममथ षट्कोणविवरे
षडर्णं किञ्जल्के स्वरयुगळमन्तश्शरमितान् ।
मनोः पत्रेष्वर्णान्विलिखतु तथान्त्ये त्वथ परान्
वृतं कद्यैर्यन्त्रं निखिलसुखदं भूपुरगतम् ।।

अस्यार्थः - प्रथमं षट्कोणं विलिख्य तत्कर्णिकायां भुवनेशीं विलिख्य, तन्मध्ये साध्यनामादीन् विलिख्य षट्सु कोणेषु,

वाग्भवस्मरशक्तिस्त्रीं ब्लूं स इत्युद्धृतो मनुः ।
षडर्णो मुनिभिस्सोऽयमभीष्टार्थसुरद्रुमः ।।

अस्यार्थः - वाग्भवः ऐंकारः । स्मरः कामबीजम् । शक्तिः पराबीजम् । इतरत् त्रयं स्त्रीं ब्लूं स इति । एतदुक्तं भवति ऐं क्लीं सौः स्त्रीं ब्लूं सः । इति विलिख्य, तद्बहिरष्टदलपद्मं विलिख्य, तत्केसरेषु स्वरद्वन्द्वं विलिख्य, दलमध्येषु मूलमन्त्रस्य वर्णान् प्रतिदलं पञ्चशः पञ्चशः विलिख्य, अवशिष्टानन्त्यदले च विलिख्य, तद्बहिः कादिवर्णैः संवेष्ट्य, तद्बहिश्चतुरश्रं विलिखेत् ।।

यन्त्रान्तरम् -

स्वयंवराख्यविद्याया यन्त्रं वक्ष्ये यथाश्रुतम् ।
सुदुश्चरं तपस्तप्त्वा दृष्टं दुर्वाससा किल ।।

पाशाङ्कुशलसत्पार्श्वां शक्तिं मध्ये विलेख्य च ।
कोणमध्ये लिखेत् स्त्रीं ब्लूं ऐं क्लीं सौः स इति क्रमात् ।।

अष्टपत्रस्य पद्मस्य मन्त्रार्णान्मुनिसङ्ख्यकान् ।
मन्त्रेष्वालिख्य तद्बाह्ये वृत्तानां त्रितये क्रमात् ।।

मारमालामनुं बाणान्मातृकां च धरापुटे ।
दिक्षु शक्तिं मारबीजं विदिक्षि च समालिखेत् ।।

**यन्त्रं स्वयंवरस्येदमालिख्य कनकादिषु ।**
**सुजप्तसिक्तसम्पातं दधानः शोभने दिने ।।**

**धनधान्यधराधेनुसस्यभूषादि संयुताम् ।**
**लब्ध्वा ह्यद्यतमां लक्ष्मीं त्रैलोक्यमपि रञ्जयेत् ।।**

अस्यार्थः - प्रथमं षट्कोणं विलिख्य, तन्मध्ये भुवनेशीं विलिख्य, तस्याः पार्श्वद्वन्द्वे 'आं क्रों' इति पाशाङ्कुशबीजद्वयं विलिख्य, पुनः साध्यनामादीन् विलिख्य, पुनः षट्सु कोणेषु 'स्त्रीं ब्लूं ऐं क्लीं सौः सः' इति क्रमात् पूर्वोक्तबीजषट्कं विलिख्य, तद्बहिरष्टदलं पद्मं विलिख्य, तेषु मन्त्रवर्णान् सप्तशो विलिख्य, अस्मिन्पक्षे योगेश्वर्यादि पदद्वयस्यापि वीप्सा जायते । तद्बहिः वृत्तत्रयं विलिख्य, प्रथमे वृत्ते काममालामन्त्रार्णैः वेष्टयेत् । द्वितीये वृत्ते तत्पञ्चबाणमन्त्रैः वेष्टयेत् । तृतीये वृत्ते मातृकावर्णैः वेष्टयेत् । तद्बहिश्चतुरश्रं विलिख्य तद्दिक्षु कामबीजं च विलिखेत् ।

प्रयोगान्तरम् -

**बैल्वैः पुष्पैः तत्फलैर्नागपुष्पैः**
**नन्द्यावर्तैरुत्पलैः कैरवैर्वा ।**
**होमं कुर्यात्स्वादुयुक्तं सहस्रं**
**लक्ष्म्यै कान्त्यै लोकसंरञ्जनाय ।।**

त्रिमधुरसिक्तैरेतैः प्रातःकाले सहस्रं जुहुयात् । उक्तफलं भवति ।।

प्रयोगान्तरम् -

**मार्ताण्डमण्डलगतामथ चेक्षुचाप-**
**पाशाङ्कुशार्तवशरोज्वलपाणिपद्माम् ।**
**स्थित्वोरुदघ्नसलिले प्रविचिन्त्य गौरीं**
**जप्यात् श्रियै सुयशसे जनरञ्जनाय ।।**

प्रयोगान्तरम् -

**समाप्य सायन्तनकर्म मन्त्री**
**मनोज्ञवेषां प्रविचिन्त्य गौरीम् ।**
**प्रत्यङ्मुखोऽष्टोर्ध्वशतं प्रजप्यात्**
**मन्त्रं समृद्ध्यै जनरञ्जनाय ।।**

अयमर्थः - सायन्तनानुष्ठानं कृत्वा, प्रत्यङ्मुखो भूत्वा, अष्टोर्ध्वशतं गौरीं ध्यात्वा नित्यशो जपेत् तस्मादुक्तफलं भवति ।।

प्रयोगान्तरम् -

**उद्यद्राकाशशाङ्कान्तपरिविलसत्पद्मसंस्थां त्रिणेत्रां**
**दोर्भिः पाशेक्षुचापाङ्कुशकुसुमशरान्बिभ्रतीमिन्दुचूडाम् ।**
**गौरीं गौराङ्गरागाम्बररुचिरतनुं चिन्तयन्मन्त्रमेनं**
**जप्यात्कान्त्यै समृद्ध्यै सुविपुलयशसे लोकसंरञ्जनाय ।।**

प्रयोगान्तरम् -

ऐं क्लीं सौः स्त्रीं ब्लूं सः इति षडक्षरीमन्त्रः । अस्य मन्त्रस्यादौ साध्यनाम संयोजयेत् । अनेन मन्त्रेण प्रयोग उच्यते -

**पुष्यर्क्षेऽष्टसहस्रं**
**घृतेन हुत्वा शरावके न्यस्य ।**
**सम्पातं दशपुष्पैः**
**वर्तिं कृत्वा च तेन संसिच्य ।।**

**प्रज्वाल्य दीपिकायां**
**देवीं सम्पूज्य यन्त्रवर्यमथो ।**
**नूतनघटे लिखित्वा**
**हरिद्रयास्मिन्मषीं समुत्पाद्य ।।**

अस्मिन्पात्रे ताव-

न्निक्षिप्य जपेत्सहस्रमष्टोर्ध्वम् ।

त्रैलोक्यमोहनिद्रा

मषिरेषा श्रीकरी च सम्प्रोक्ता ।।

अयमर्थः - पुष्यनक्षत्रे अष्टोत्तरसहस्रसङ्ख्यं घृतेन हुत्वा सम्पातं च एकस्मिन्शरावके सम्पाद्य, पुनर्दशपुष्पं पिष्ट्वा अनेन वर्तिं सम्पाद्य तां वर्तिमनेन सम्पाताज्येन संसिच्य अनेन षडक्षरीमन्त्रेण तां वर्तिं सञ्जप्य, पुनर्दीपे स्वयंपरामूर्तिं सम्पूज्य, तस्मिन्दीपे अनया वर्त्या मषीं संपाद्य, पुनरेकस्मिन्नवघटे हरिद्राजलेन पूर्वोक्तयन्त्रं विलिख्य, तस्मिन्घटे मषीं विनिक्षिप्य अनेन षडक्षरीमन्त्रेण अष्टोत्तरसहस्रं तत्स्पृष्ट्वा जप्त्वा नेत्रयोर्विलेपयेत् । तस्मात्-त्रैलोक्यवश्यं च श्रीकरं च भवेत् ।।

अथ यन्त्रमुच्यते -

अथ कथयामि समासात्

अपरं त्रैलोक्यमोहिनीयन्त्रम् ।

अष्टपलाशं पद्मं

विलिख्य तत्कर्णिकान्तरे शक्तिम् ।।

तस्या मध्ये जीवं

साध्याख्यं कर्मवर्तिमपि कुर्यात् ।

दृष्टिं पार्श्वद्वन्द्वे

शक्तिं परितश्च बाणमन्त्रेण ।।

प्राणस्थापनमनुना-

प्यावेष्ट्याशादळस्थितां शक्तिम् ।

संवेष्ट्य बाणमन्त्रैः

चतुर्भिरपरैः क्रमेण विशदमतिः ।।

आग्नेयाद्यष्टदल-

स्फुरन्मनोजन्मबीजमभिवेष्ट्य ।

यन्त्रान्तरे च संस्थं
स्मरमालामन्त्रमूलमन्त्रैश्च ।।

ऐंस्त्रींब्लूंमित्येतैः
वाह्ये चावेष्ट्य चाष्टपत्रस्य ।
अजपां परमात्ममनुं
गायत्रीं मन्त्रयन्त्रयोः सुलिपिम् ।।

विलिखेद्यथावकाशं
हैमे पट्टे सुवर्णलेखिन्या ।
शोभनतरे मुहूर्ते
यन्त्रमिदं वाञ्छितार्थदं नृणाम् ।।

अस्यार्थः - प्रथमं अष्टपत्रपद्मं विलिख्य, तत्कर्णिकामध्ये भुवनेश्वरीं विलिख्य, तन्मध्ये साध्यनामादीन् विलिख्य, तत्र शक्तिं परितश्चेति षष्ट्यर्थे द्वितीया । तत्र क्रर्णिकायां लिखितस्य सवस्य परितः पञ्चबाणमन्त्रैः संवेष्ट्य तत्रैव तद्बहिः प्राणप्रतिष्ठामन्त्रेणापि संवेष्ट्य, पुनः प्रागादि दिग्दलेषु भुवनशीं विलिख्य तां बाणमन्त्रचतुष्टयेन संवेष्ट्य, पुनराग्नेयादि दलेषु कामबीजं विलिख्य, पञ्चबाणमन्त्रेण तद्वेष्ट्य पुनस्तत् बाणपञ्चकं यन्त्रमध्ये विलिख्य, पुनस्तस्याष्टदलस्य बहिः "क्लीं नमः कामदेवाय" इत्यादिकाममालामन्त्रैः तद्बहिः "ऐं स्त्रीं ब्लूं" इत्येतैः त्रिभिश्च पञ्चवृत्तेषु संवेष्ट्य, पुनः "हंस" इत्यजपां, "सोहं" इति परमात्ममनुं "मन्त्रराजाय विद्महे" इत्यादि मन्त्रगायत्रीं, "यन्त्रराजाय विद्महे" इत्यादि यन्त्रगायत्रीं च यथावकाशं विलिखेत् ।। इति ।।

अथ यन्त्रान्तरमुच्यते -

तिसृभिस्तिसृभिर्बिन्दुभि-
रूर्ध्वाधस्संयुक्तषकारममुम् ।

**संवेष्ट्य रेखयोर्ध्वं**
**बिन्दुं कृत्वा तदन्तरा नीत्वा ।।**
**एतद्यन्त्रान्तरमिति**
**कथितं ज्ञेयं गुरूपदेशेन ।**

अस्यार्थः -

षकारं विलिख्य, तस्य बिन्दुरेखया पकाराकाररेखया उपरि चाधस्ताच्च तादृशं बिन्दुत्रयं यथा भवति तथा विलिख्य, तद्रेखाग्रेण परितः संवेष्ट्य, तदग्रे बिन्द्वाख्यं विलिख्य, तदग्रेमन्त्रः प्रवेशयेदिति ।

अथ दशपुष्पसंज्ञा लिख्यते -

**सहा-देवि-दूर्वा-मधुप-मुसली-विष्णुदयिता-**
**सदाभद्रा-लक्ष्मीः शतमखलताऽऽथाञ्जलिकरी ।**

अस्य दशविधपुष्पस्य योजनार्थं परिमाणमुच्यते -

**एकं धूर्जटिनयनं त्रयोदश द्वे च सप्तमनुरुद्राः**
**भणिरविदिक्क्रमभागाः विहिता (दशपुष्पपरिमाणाः) ।।**

अयमर्थः - सहकणज ।। देवीकणज ।। इत्यादि प्रमाणोक्तक्रमेण गन्धद्वारामित्यादि मन्त्रैः एकैकैः एकैकं संयोजयेत् । अथवा गन्धद्वारामित्याद्यृचा सर्वं योजयेत् इति स्वयंवराकल्पः समाप्तः ।।

अथ स्वयंवराभन्त्रप्रसङ्गात् कल्पान्तरोक्तस्तन्न्यासोऽप्यत्र योगयता-वशाल्लिख्यते -

प्रथमं गुरुगणपतिवन्दनानि कृत्वा ह्स्रैं स्ह्रैं एताभ्यां मूलमन्त्रेण च हृदयादारभ्य मूर्धपर्यन्तं न्यसेत् । एवं मन्त्रोदयं कृत्वा पुनः नववारं भुवनेश्वर्यावृत्त्या रेचकं कृत्वा, तद्द्विगुणावृत्त्या पूरकं कृत्वा, द्वात्रिंशद्वारं भुवनेशीपूर्वकेण मूलमन्त्रत्रिवारेण कुम्भकं प्रणायामं च कृत्वा, पुनः हस्ततले दक्षिणनासिकाश्वासमार्गेण तेजस्स्वीकारपूर्वकं मूलमन्त्रेण

देहे व्याप्य, पुनः पीठन्यासं कुर्यात् । तत्र नवशक्तीः प्रागत्रैव स्वयंवरविधानोक्तिप्रकारेण न्यसेत् । पुनः हृदये समावाह्य प्राणप्रतिष्ठां च कृत्वा पुनः मूलमन्त्रेण त्रिवारं कुम्भकं कृत्वा तेजस्स्वीकारपूर्वकं अङ्गैः करन्यासं कृत्वा, पुनः पञ्चबाणैश्च करन्यासं कुर्यात् ।

द्रां द्रावणबाणाय नमः । द्रीं क्षोभणबाणाय नमः । क्लीं वशीकरणबाणाय नमः । ब्लूं आकर्षणबाणाय नमः । सः सम्मोहनबाणाय नमः इति पञ्चबाणमन्त्रः ।।

पुनः मूलेन व्याप्य,

ह्रां हृल्लेखायै नमः । ह्रीं गगनायै नमः । ह्रः रक्तायै नभः । ह्रैं करालिकायै नमः । ह्रौं महोच्छुष्मायै नमः । एतानि पञ्चतत्वानि शिरो - वदन - हृदय - गुह्य - पादेषु न्यसेत् ।।

पुनः शुद्धमातृकान्यासः ।। पुनः भुवनेशीपुटितमातृकान्यासः । पुनः कामबीजपुटितमातृकान्यासः । पुवर्भुवनेशीपुटितमूलमन्त्रवर्णन्यासः ।।

तस्य स्थानं -

**शीर्षालिकक्षुतिविलोचनघोणगण्ड-**
**दन्तोष्ठपाणिपदसन्धिषु साग्रकेषु ।**
**आधारपारर्श्वहृदयस्तनकक्षसांस-**
**शीर्षेषु विन्यसतु मन्त्रवरस्य वर्णान् ।। इति ।।**

अथ पदन्यासः -

**शीर्षदक्षकपोलांस-पार्श्व-नाभ्यन्यपार्श्वके ।**
**अंस-तालु-शिरो-वक्त्र पृष्ट-हृत्सु पदानि च ।।**

एवं द्वादशधा विभज्य पदन्यासः । पुनः "झ्रैं चापाय नमः । ज्यां ज्यां ज्यायै नमः" । इति नेत्रद्वये चापरूपेण, उपरि भागे चापमन्त्रेण अधस्ताद्गुणमन्त्रेण गुणरूपेण च न्यसेत् । पुनः पञ्चबाणान् प्रागुक्तान् नेत्रश्रवणास्येषु न्यसेत् । पुनर्मध्यशिरसि च तत्र दिक्षु च

पञ्चबाणान्न्यसेत् । पुनः शिरोविदिक्षु च तत्र मध्ये च, पुनः हस्तद्वयपञ्चसन्धिषु, पुनः पादद्वये च तथैव पुनः मूर्धास्यहृदयगुह्यपादेषु च पञ्चबाणान् न्यसेत् । पुनर्मुखे षट्कोणं संचिन्त्य तन्मध्ये कर्णिकायां ह्रीं क्लीं इति न्यस्य, कोणेषु षट्सु वाग्भवं विन्यस्य, ब्लूं इति सन्धिषु, स्त्रीं इति कोणाग्रेषु च विन्यस्य, पुनः, ह्रीं कामदेवाय नमः । क्लीं मन्मथाय नमः । ऐं कन्दर्पाय नमः । ब्लूं मकरध्वजाय नमः । स्त्रीं मनोभवाय नमः । इति पञ्चमनोभवमन्त्रैः नेत्रघ्राणेत्यादि वक्ष्यमाणस्थानेषु दशधा न्यस्त्वा, पुनः नेत्रघ्राणमुखेषु इत्यादिस्थानेष्वेव पञ्चबाणान्न्यसेत् ।

**नेत्रघ्राणमुखेषु पाणिपदयोः साग्रेषु सन्धिष्वथो**
**मूलाधारसलिङ्गनाभ्युदरहृत्पार्श्वापराङ्गस्तने ।**
**कण्ठांसत्रिकवक्त्रगण्डरसनाघ्राणाक्षिकर्णालिके-**
**ष्वेतान्विन्यसतु क्रमेण दशधा बाणान् जगन्मोहनान् ।।** इति

द्रां द्रावणेत्याद्युक्ताः पञ्चबाणमन्त्राः । एवं दशकृत्वः पञ्चबाणान्न्यसेत् । तत्र एकैकावृत्तौ बाणन्यासस्य एकैकेन मन्त्रेण च मध्ये व्यापकं कुर्यात् ।।

ते दशव्यापकमन्त्राः कथ्यन्ते । प्रथमं कामबीजं, पुनः कामगायत्री, पुनः काममालामन्त्रः, पुनः अश्वारूढा, पुनः नित्यक्लिन्ना, पुनः श्रीबीजं, पुनर्भुवनेशी, पुनर्वाग्भवः, पुनः ह्रीं कामदेवाय नमः इत्याद्युक्ताः पञ्चमनोभवाः, पुनर्मूलमन्त्रः, एतैर्दशभिः मध्ये मध्ये व्यापयेत्।

**कामदेवाय विद्महे पुष्पबाणाय धीमहि ।**
**तन्नोऽनङ्ग प्रचोदयात् ।।** इति कामगायत्री ।।

क्लीं नमः कामदेवाय सर्वजनप्रियाय सर्वजनसम्मोहनाय ज्वल ज्वल प्रज्वल प्रज्वल सर्वजनस्य हृदयं मम वशं कुरु कुरु स्वाहा ।। इति काममालामन्त्रः ।।

आं ह्रीं क्रों एहि परमेश्वरि स्वाहा ।। इति अश्वारूढा ।।

ह्रीं नित्यक्लिन्ने मदद्रवे स्वाहा ।। इति नित्यक्लिन्ना ।।

पुनः, ऐं कामचापाय इक्षुधनुषे नमः । ज्यां ज्यायै नमः । इति वामनेत्रे उपरिभागे चापमन्त्रेण चापरूपेण न्यस्त्वा, अधस्ताद् गुणमन्त्रेण गुणरूपेण च न्यसेत् । पुनः,

द्रां द्राविण्यै मकरध्वजाय द्राविणीबाणाय पद्मोत्पलं हं क्लीं हुं फट् स्वाहा ।।

द्रीं क्षोभिण्यै मकरध्वजाय क्षोभिणीबाणाय बिल्वोत्पलं हं क्लीं हुं फट् स्वाहा ।।

क्लीं वशीकरिण्यै मकरध्वजाय वशीकरिणीबाणाय जम्बूत्फल हं क्लीं हुं फट् स्वाहा ।।

ब्लूं आकर्षिण्यै मकरध्वजाय आकर्षिणीबाणाय रक्तोत्पलं हं क्लीं हुं फट् स्वाहा ।।

सं सम्मोहिन्यै मकरध्वाजाय सम्मोहिनीबाणाय नीलोत्पलं हं क्लीं हुं फट् स्वाहा ।।

इति वामनेत्रे पूर्वन्यस्तगुणे ऊर्ध्वमुखेन स्थिताः क्रमेण पञ्चबाणा न्यस्तव्याः ।। पुनः शुद्धमातृतान्यासं कृत्वा, मूलमन्त्रस्याङ्गऋष्यादीन् कृत्वा जप्यात् ।।

**।। एवं स्वयंवरान्यासविधिः ।।**

अथ स्वयंवरामन्त्रप्रसङ्गात् वश्यकरं पञ्चबाणन्यासविधानमपि अत्र लिख्यते -

द्रां द्रावणबाणाय नमः । द्रीं क्षोभणबाणाय नमः । क्लीं वशीकरणबाणाय नमः । ब्लूं आकर्षणबाणाय नमः । सं सम्मोहनबाणाय नमः । इति पञ्चबाणमन्त्राः । एतैः स्वशरीरे न्यसेत् ।।

अस्य स्थानमुच्यते -

**नेत्रघ्राणमुखेषु पाणिपदयोः साग्रेषु सन्धिष्वथो**
**मूलाधारसलिङ्गनाभ्युदरहृत्पार्श्वापराङ्गस्तने ।**
**कण्ठांसत्रिकवक्त्रगण्डरसनाघ्राणक्षिकर्णालिके-**
**ष्वेतान्विन्यसतु क्रमेण दशधा बाणान् जगन्मोहनान् ।।**

एतेषु स्थानेषु पञ्चभिर्बाणमन्त्रैः दशावृत्त्या न्यसेदित्यभिप्रायः । पश्चात्काममन्त्रं जपेच्च ।।

(अथ) **भुवनेश्याः** विधानमुच्यते -

शक्तिः ऋषिः । गायत्री छन्दः । बोधस्वरूपा संविद्देवता । हं बीजम् । ईं शक्तिः । ह्रां हृत् । ह्रीं शिरः । इत्याद्यङ्गानि ।।

ध्यानम् -

**उद्यद्भास्वत्समाभां विजितनवजपामिन्दुखण्डावनद्ध-**
**द्योतन्मौलिं त्रिणेत्रां विविधमणिलसत्कुण्डलां पद्मगां च ।**
**हारग्रैवेयकाञ्चीगुणमणिवलयाद्यैर्विचित्राम्बराढ्या-**
**मम्बां पाशाङ्कुशेष्टाभयकरकमलाम्बिकां तां नमामि ।।**

ह्रीं । इति मन्त्रः ऐश्वर्यप्रधानोऽयं मन्त्रः ।

अथ न्यासो मन्त्रदेवताप्रकाशिकोक्तप्रकारेण लिख्यते -

पूर्वं करन्यासं कुर्यात् । तद्यथा -

ओं ह्रौं हृल्लेखा अङ्गुष्ठाभ्यां नमः । ओं ह्रैं गगना तर्जनीभ्यां नमः । ओं ह्रूं रक्ता मध्यमाभ्यां नमः । ओं ह्रीं करालिका अनामिकाभ्यां नमः । ओं ह्रां महोच्छुष्मा कनिष्ठिकाभ्यां नमः । इति, अङ्गुष्ठाद्यङ्गुलीषु विन्यस्य अस्त्रं तलयोर्विन्यसेत् । (अत्र हृल्लेखायै, गगनायै इत्येवमादि चतुर्थ्यन्तः प्रयोगः युक्तः)

शक्तिः ऋषिः । गायत्री छन्दः । बोधस्वरूपा सुखसंविद्देवता । इति, मूर्धास्य हृदयेषु विन्यस्य,

हं बीजम् । ईं शक्तिः । चतुर्विधपुरुषार्थे विनियोगः ।

ओं ह्रौं हृल्लेखायै ऊर्ध्ववक्त्रायै नमः । ओं ह्रैं गगनायै पूर्ववक्त्रायै नमः । ओं ह्रूं रक्तायै दक्षिणवक्त्रायै नमः । ओं ह्रीं करालिकायै उत्तरवक्त्रायै नमः । ओं ह्रां महोच्छुष्मायै पश्चिमवक्त्रायै नमः । इति, ऊर्ध्वादि वक्त्रेषु अङ्गुष्ठाद्यङ्गुलीभिः विन्यस्य मूलेन व्यापकं कृत्वा, ह्रां गायत्र्यै नमः । ह्रीं सावित्र्यै नमः । ह्रूं सरस्वत्यै नमः । इति गलसव्यदक्षिणस्तनेषु विन्यस्य,

ह्रां ब्रह्मणे नमः । ह्रीं विष्णवे नमः । ह्रूं रुद्राय नमः । इति वामांस-हृदय-दक्षिणांसेषु विन्यस्य,

ओं आं ब्रह्माण्यै नमः । ओं ईं माहेश्वर्यै नमः । ओं ऊं कौमार्यै नमः । ओं ॠं वैष्णव्यै नमः । ओं ॡं वाराह्यै नमः । ओं ऐं इन्द्राण्यै नमः । ओं औं चामुण्डायै नमः । ओं अः महालक्ष्म्यै नमः । इति, शिरो-ललाट-वामांस-पार्श्वदक्ष-पार्श्वांस पृष्ठ-हृदयेषु विन्यस्य,

अं ब्रह्मगायत्रीभ्यां नमः । उं विष्णुसावित्रिभ्यां नमः । मं ईश्वर-सरस्वतिभ्यां नमः । श्रीं धनपति श्रीभ्यां नमः । क्लीं स्मररतिभ्यां नमः । गं गणपतिपुष्टिभ्यां नमः । एतानि मिथुनानि, दक्षिणकपोल-वामकपोल-वामकण्ठ मुखास्य-दक्षिणकर्णेषु विन्यस्य,

ओं शङ्खनिधये नमः । ओं पद्मनिधये नमः । इति, सव्यदक्षिणकर्णगण्डान्तरालयोः विन्यस्य,

ओं ह्रीं इति व्यापकत्रयं कृत्वा, एवं न्यस्तशरीरः देवीमात्मत्वेन प्रविभावयेत् ।।

तत्र पाशाङ्कुशाभयवरदशब्दार्थमाह -

धातू द्वौ स्तो रक्षणव्यापकार्थौ
पाद्यो श्चाद्य[1]स्तत्प्रभावात्तयोश्च ।
सर्व संरक्ष्याथ सर्वात्मना यो
व्याप्नोत्यंशस्स्यादसौ पाशवाची ।।

अं स्यादात्मा कुर्धरा कुस्तनुर्वा
भागार्थस्स्यात्[2] शोऽथवा वृत्तिवाची ।
भूश्चेद्भूतान्यन्यथा चेच्छरीरा-
ण्याकृष्यात्मन्याहरेदङ्कुशाख्यः ।।

स्मृते यथा संसृतिचक्रचङ्क्रमो-
द्भवाद्घनापायसमुत्थितादपि ।
वियोजयत्यात्मतनुं नरं भयात्
तथा भयस्याभयसंज्ञिता विभो ।।

मुख्यार्थवाची वरशब्द उक्तः
स्याद्वाञ्छितार्थश्च वराभिधानः ।
मुख्यन्त्वभीष्टं स्मृतिमात्रकेण
ददाति योऽसौ वरदोऽवगम्यः ।।

द्वात्रिंशल्लक्षं जपेत् पुरश्चरणार्थम् । हविष्याशी नक्ताशी वा । जपाद्दशांशं अष्टद्रव्यैर्हुनेत् पुरश्चरणार्थं गुडक्षौद्रघृतावसिक्तैः ।।

अश्वत्थोदुम्बरजाः
प्लक्षन्यग्रोधसंभवाः समिधः ।
तिल-सर्षप-दौग्ध-घृता
न्यष्टद्रव्याणि सम्प्रदिष्टानि ।।

प्लक्षं पिंपरी । न्यग्रोधः वटः । दौग्धं पायसम् ।

---

1. पाद्योऽशाद्यः । 2. भागार्थः स्याच्छोऽथ - इति प्रपञ्चसारे ।

अथास्याः त्रिगुणितयन्त्रविधिः लिख्यते -

**शक्त्याः विस्साध्यमिन्द्रानिलनिर्ऋतिगबीजाभिवद्धं पुरोग्रे-**
**स्तत्कोणोल्लासिमाग्रं हरिहरविलसद् गण्डमेभिस्समायैः ।**
**वर्णैश्चावेष्टिं तत् त्रिगुणितमिति विख्यातमेतत् सुयन्त्रं**
**स्यादायुष्यं च वश्यं धनकरममितश्रीप्रदं कीर्तिदं च ।।**

अस्यार्थः - प्रथमं त्रिकोणं विलिख्य, तन्मध्ये भुवनेशीं विलिख्य, तन्मध्ये साध्यनामादीन्विलिखेत् । पुनस्त्रिषु कोणाग्रस्थानेषु बहिर्भुवनेशीं विलिख्य, तद्भुवनेशीत्रयमपि स्वस्याः स्वस्याः रेफांशाग्रेण स्वं स्वमात्मानं प्रदक्षिणीकृत्य अनन्तरामनन्तरां भुवनेशीं बहिष्कृत्य तृतीयाया भुवनेश्या ईकारांशेन योजयेत् । पुनः त्रिकोणकोणोदरेषु त्रिष्वपि चतुर्थस्वरं ईकारं सबिन्दुकं विलिख्य, पुनः कोणत्रयाणामपि पार्श्वयोः हरि-हर इत्यक्षर-चतुष्टयमेकैकस्मिन् पार्श्वे द्वौ द्वौ विलिखेत् । पुनः बहिर्वृत्तत्रयं विलिख्य प्रथमे वृत्ते हरिहर इत्यक्षरचतुष्टयपूर्वकं चतुर्थस्वराख्यमीकारं सबिन्दुकं पूर्वलिखितभुवनेशीत्रितयान्तरालप्रदेशस्य ऋजुदेशे हरिं ईं हरं ईं इत्येवं प्रकारेण विलिखेत् । पुनः, द्वितीये वृत्ते अनुलोममातृकावर्णैश्च वेष्टयेत् । तृतीये तु चकारात् प्रतिलोममातृकावर्णैश्च वेष्टयेत् ।।

"तत्रायुष्यं च वश्यं धनकरममितश्रीप्रदं कीर्तिदं च" । इति ।।

आयुष्ये, मध्यस्थं बीजं मृत्युञ्जयेनावेष्टयेत् । वश्ये, शाक्तेन बीजेन, धनश्रियः श्रीबीजेन, कीर्तौ [illegible]पया वेष्टयेत् । एव त्रिगुणितयन्त्रम् ।।

अथ अस्मिन् यन्त्रे पूजाविधिः कथ्यते । जयायै विजयायै । अजितायै । अपराजितायै । नित्यायै । विलासिन्यै । दोग्ध्र्यै । अघोरायै । मङ्गलायै ।। एतास्तु नवशक्तयः ।। ह्रीं श्रीं भुवनेश्वर्यासनाय नमः । ह्रीं भुवनेश्वरीमूर्तये नमः । इति, पीठपूजामन्त्रः ।।

अस्मिन् पीठे समावाह्य देवीं सम्पूजयेत् । तत्र पाशाङ्कुशधरा रक्तवस्त्राभरणभूषिता नवशक्तयः ।।

पुनः प्रथमं, "हृल्लेखायै नमः" इति पुरतः सम्पूजयेत् ।

गगनायै । रक्तायै । करालिकायै । महोच्छुष्मायै । इति प्रागादि दिक्षु । एतास्तु प्रधानदेवतासदृशाः एवं प्रथमावृतिः ।।

अङ्गैः द्वितीयावृतिः -

पुनः "गायत्र्यै नमः" इत्यैन्द्रे, "सावित्र्यै नमः" इति नैर्ऋत्यां, "सरस्वत्यै नमः" इति वायौ, "ब्रह्मणे नमः" इत्याग्नेये, "विष्णवे नमः" इति वारुणे, "रुद्राय नमः" इति ऐशान्ये ।।

पुनरेतासां मूर्तीनां वर्णान्युच्यन्ते -

**रक्ता रक्ताकल्पा चतुर्मुखी कुण्डिकाक्षमालेऽब्जे ।**
**दधती गायत्री साप्येतादृशा एव कीर्तितो ब्रह्मा ।।**

**अरिदरगदाब्जहस्ता किरीटकेयूरहारसंभिन्ना ।**
**सावित्री सा कथिता तादृग्रूपो भवेच्च विष्णुश्च ।।**

**टङ्काक्षाभयवरदान् दधती च त्रीक्षणेन्दुकलितजटा ।**
**विकृताकल्पा च भवेत् सरस्वती ईश्वरश्च तादृग्रूपः[1] ।।**

एवं तृतीयावृतिः । मातृभिश्चतुर्थी । इन्द्रादिभिः पञ्चमी । एवं त्रिगुणितयन्त्रे भुवनेश्वरीं पूजयेत् ।।

भुवनेश्या विधानमन्त्रप्रसङ्गात्, अथ श्रीमन्त्रविधानमुच्यते -

भृगु ऋषिः । निचृत् छन्दः । श्रीर्देवता ।। शं बीजं । ईं शक्तिः ।। श्रां हृत् । श्रीं शिरः । इत्याद्यङ्गानि ।।

---

1. तादृशश्च रुद्रोऽपि इति प्रपञ्चसार०

ध्यानम् -

**भूयाद्भूयो द्विपद्माभयवरदकरा तप्तकार्तस्वराभा**
**शुभ्राभ्राभेभयुग्मद्वयकरधृतकुम्भादि्भरासिच्यमाना ।**
**रत्नौघाबद्धमौलिर्विमलतरदुकूलार्तवालेपनाढ्या**
**पद्माक्षी पद्मनाभोरसि कृतवसतिः पद्मगा श्रीः श्रियै नः[1] ।।**

श्रीं इति मन्त्रः ।। ऐश्वर्यप्रधानोऽयं मन्त्रः ।। द्वादशलक्षजपः । द्वादशसहस्रं त्रिमधुरसिक्तैः सरोजैर्वा तिलैर्वा बिल्वसमिद्भिर्वा जुहुयात् पुरश्चरणार्थम् ।।

अथ, पुरश्चरणकलशं शुद्धजलैर्वा अन्यैः काषायैर्वा सम्पूर्य सम्पूज्य संजप्य समभिषिञ्चेत् शिष्यं गुरुः ।

अथ, पीठपूजार्थं पीठविधानमुच्यते -

**रुचिराष्टपत्रमथ वारिरुहं**
**गुणवृत्तराशिचतुरश्रयुतम् ।**
**प्रविधाय पीठमपि तत्र यजेत्**
**नवशक्तिभिस्सह रमां च ततः ।।**

अयमर्थः - अष्टपत्रं विलिख्य, तद्बहिर्वृत्तत्रयं विलिख्य, तद्बहिर्द्वादशराशिखण्डं विलिख्य, तद्बहिः चतुरश्रं विलिख्य, कर्णिकायां श्रीबीजं विलिख्य, तस्मिन्पीठे नवशक्तिभिरिष्ट्वा, रमामावाहयेत् ।।

विभूत्यै । उन्नत्यै । कान्त्यै । हृष्ट्यै । कीर्त्यै । सन्नत्यै । व्युष्ट्यै । उत्कृष्ट्यै । ऋद्ध्यै । इति नवशक्तयः ।।

श्रीं श्रीदेव्यासनाय नमः । श्रीं श्रीदेवीमूर्तये नमः । इति कर्णिकायां नवशक्त्यादौ श्रीबीजं योजयेच्च ।।

---

1. पद्मगा श्रीः श्रिये वः ।। इति प्रपञ्चसारे ।।

पुनः आवाह्य अङ्गैः प्रथमावृतिः।

वासुदेवाय । सङ्कर्षणाय । प्रद्युम्नाय । अनिरुद्धाय । इति पूर्वादि दिक्षु ।। दमकाय । शलभाय । गुग्गुलवे । कुरण्डकाय । इति गजान् आग्नेयादि विदिक्षु । शं शङ्खनिधये । पं पद्मनिधये । इति वामदक्षिणपार्श्वयोः । इति द्वितीयावृतिः ।

बलाक्यै । विमलायै । कमलायै । वनमालिकायै । विभीषिकायै । द्राविकायै । शाङ्कर्यै । वसुमालिकायै । इति तृतीयावृतिः । इन्द्रादिभिश्चतुर्थी ।।

अथ प्रयोगः -

अम्भस्युरोजद्वयसेऽभितिष्ठन् त्रिलक्षमेनं प्रजपेन्मनुं च ।
श्रियं विचिन्त्यार्कगतां यथावत् दरिद्रताया भवति प्रमुक्तः[1] ।।

प्रयोगान्तरम् -

वसतावुपविश्य कैटभारेः
कमलावृक्षतलेऽथवा त्रिलक्षम् ।
जपतोऽपि भवेच्च काङ्क्षितार्थात्
अधिकं यत्सरतो वसुप्रपञ्चः ।।

अयमर्थः - विष्णवालये बिल्ववृक्षनिकटे वा स्थित्वा लक्षत्रयं जपेत् । संवत्सरात्प्रागेव वसुप्रपञ्चो भवति ।।

प्रयोगान्तरम् -

जुहुयादशोकदहने सघृतैरपि तण्डुलैस्सकलवश्यतमम् ।

---

1. इतः परं - अयमर्थः - स्तनप्रमाणे जले स्थितः एतं मन्त्रं (श्रीबीजं) लक्षत्रयं जपेत् सूर्यमण्डले लक्ष्मीं ध्यायन् । दरिद्रतायाः प्रमुक्तो भवति । इति श्लोकार्थः । इति श्लोकार्थः ग्रन्थान्तरेषु दृश्यते ।।

अयमर्थः - अशोकेन्धनकृतदहने घृतसिक्तैः तण्डुलैः "सङ्ख्यानुक्ते सहस्रमिति" न्यायात् सहस्रं जुहुयात् । वश्यकरं भवति ।

प्रयोगान्तरम् -

खदिरानले त्रिमधुरैरपि धनदं च राजकुलवश्यमपि । खदिरं खैरं ।

अयमर्थः - खदिरेन्धनकृतदहने त्रिमधुरसिक्तैः तण्डुलैः होमो धनप्रदश्च राजकुलवश्यदश्च स्यात् ।

प्रयोगान्तरम् -

**समधुरनलिनानां लक्षहोमादलक्ष्मी-**

**परिगतमपि जन्तुं प्राप्नुयात् श्रीस्समग्रा ।**

**धनविभवसमृद्ध्य नित्यमाह्लादयन्ती**

**त्यजति न करुणार्द्रा तस्य सा सन्ततिं च ।।**

अयमर्थः - त्रिमधुरसिक्तैः कमलैः लक्षं यो जुहोति तं अलक्ष्मीनिकटस्थमपि लक्ष्मीः प्राप्नुयात् । तस्य सन्ततिं च न त्यजति ।।

प्रयोगान्तरं -

**बिल्वं श्रीसूक्तजापी निजभुवि मुखजो वर्धयित्वाऽस्य पूर्वं**

**पत्रैस्त्रिस्वादुयुक्तैः कुसुमफलसमित्स्कन्धभेदैस्ततश्च ।**

**तन्मूलैर्मण्डलात्प्राक् सुनियतचरितोऽसौ हुताग्निर्मलात्मा**

**रूपं पश्येद्रमायाः कथमपि न पुनःस्तत्कुलेस्यादलक्ष्मीः ।।**

अयमर्थः - पूर्वं ब्राह्मणो निजभूमौ बिल्वं संस्थाप्य, तत् स्पृष्ट्वा श्रीसूक्तं जपेत् । श्रीसूक्तजापी सन् जलसेचनं च कुर्यात् । पुनः अस्य बिल्ववृक्षस्य यानि पत्राणि तानि सर्वाणि सङ्गृह्य क्रमेणैकैकं त्रिमधुरसिक्तं श्रीबीजमन्त्रेण जुहुयात् । पुनः तदवसाने यानि कुसुमानि तान्यपि त्रिमधुरसिक्तानि क्रमेण पूर्ववदेव जुहुयात् । पुनः तत्फलैरपि एवमेव जुहुयात् । पुनः तस्य समिद्भिः, पुनस्तस्य शृङ्गभेदैः, पुनस्तस्य

मूलैश्च त्रिमधुरसिक्तैः सर्वैरेव जुहुयात् । तस्मात् निर्मलात्मा भूत्वा मण्डलात्प्रागेव रमायाः स्वरूपं पश्यति । अलक्ष्मीपरिहारोऽपि भवतीति किमु वक्तव्यम् ।

अथ त्रिपुराविधिः -

आराध ऋषिः । देवीगायत्री छन्दः । त्रिपुराभैरवी देवता । ऐं बीजं । क्लीं शक्तिः, सौः वा शक्तिः ।

ह्.स्रैं आं हृत् । ह्.स्रैं ईं शिरः । ह्.स्रैं ऊं शिखा । ह्.स्रैं ऐं कवचम् । ह्.स्रैं औं नेत्रम् । ह्.स्रैं अः अस्त्रम् ।।

ध्यानम् -

**आताम्रार्कायुताभां कलितशशिकलारञ्जितप्तां त्रिणेत्रां**
**देवीं पूर्णेन्दुवक्त्रां विधृतजपवटीपुस्तकाभीत्यभीष्टाम् ।**
**पीनोत्तुङ्गस्तनार्तां वलिलसितविलग्नामसृक्पङ्कराज-**
**न्मुण्डस्रङ्मण्डिताङ्कीमरुणतरदुकूलानुलेपां नमामि ।।**

तप्तेति जटा । सर्वत्र सर्वासां देवतानां दक्षिणहस्ते अभयमुद्रा । वामहस्ते वरदमुद्रा । तत्र अन्योन्यसंश्लिष्टप्रसारितांगुलि दक्षिणकरतल मणिबन्धात् ऊर्ध्वकृताग्रं साधकं "मा भैषीः" इति प्रदर्शयतीत्यभिनयरूपा अभयमुद्रा । मणिबन्धात् अन्योन्यसंश्लिष्टप्रसारिताङ्गुलिरधः स्थिताग्रा उक्ता साधकस्याभीष्टप्रदर्शनाभिनयरूपा वरदमुद्रेति च सम्प्रदायः । मणिबन्धो नाम हस्ततलस्य मूलदेशः । विलग्नमिति मध्यस्य संज्ञा ।

ह् स् रैं - ह् स् क् ल् रीं - ह् स् रौः इति त्रिपुरामन्त्रः । विद्यैश्वर्यवश्यफलप्रधानोऽयं मन्त्रः ।।

तत्र मन्त्रोद्धारस्यार्थः संग्रहत उच्यते -

हकारसकाररेफऐकारबिन्दुभिः प्रथमं बीजम् । हकारसकार-ककारलकाररेफईकारबिन्दुभिः द्वितीयम् । हकारसकाररेफऔकार विसर्जनीयैस्तृतीयम् ।।

तत्र वागैश्वर्यातिशयदतया वाग्भवं बीजमुक्तम् । त्रैलोक्यक्षोभण-वश्याकृष्टिदं कामराजम् । शाक्तं क्ष्वेलापहरणकविताकारकं मन्त्रमेतत् प्रोक्तम् (?) । धर्मद्रविणसुखमोक्षप्रदं साधकानाम् । एवं त्रयाणां बीजानां फलम् । तत्र वाग्भवयोगात् प्रथमबीजस्य वाक्भवसंज्ञा । कामबीजयोगात् द्वितीयस्य तत्संज्ञा । औकारयोगात् तृतीयस्य शाक्तसंज्ञा ।।

अथ महाबालात्रिपुरसुन्दरीमन्त्रः कल्पान्तरे दृष्टश्च लिख्यते -

आनन्दभैरव ऋषिः । देवीगायत्री छन्दः । श्रीमहात्रिपुरसुन्दरी देवता । ऐं बीजम् । क्लीं शक्तिः । सौं कीलकम् ।।

ऐं ह्रीं श्रीं ऐं क्लीं सौः श्रीमहात्रिपुरसुन्दरी ह्रीं सर्वज्ञायै ह्रां हृदयाय नमः । ऐं इत्यादि ह्रीं इत्यन्तं नित्यतृप्तायै ह्रीं शिरः । ऐं इत्यादि ह्रीं इत्यन्तं अनादि बोधायै ह्रूं शिखा । ऐं इत्यादि ह्रीं इत्यन्तं स्वतन्त्रायै ह्रैं कवचम् । ऐं इत्यादि ह्रीं इत्यन्तं अलुप्तशक्तये ह्रौं नेत्रत्रयम् । ऐं इत्यादि ह्रीं इत्यन्तं अनन्तशक्तये ह्रः अस्त्राय फट् ।।

ध्यानम् -

**सकुङ्कुमविलेपनां अलिकचुम्बिकस्तूरिकां**
**समन्दहसितेक्षणां सशरचापपाशाङ्कुशाम् ।**
**अशेषजनमोहिनीं अरुणमाल्यभूषाम्बरां**
**जपाकुसुमभासुरां जपविधौ स्मरेदम्बिकाम् ।।**

ध्यानान्तरम् -

**चतुर्भुजे चन्द्रकलावतंसे कुचोन्नते कुङ्कुमरागशोणे ।**
**पुण्ड्रेक्षुपाशाङ्कुशपुष्पबाणहस्ते नमस्ते जगदेकमातः ।।**

**हेमाद्रौ हेमपीठस्थितिमखिलसुरैरीड्यमानां विराजत्-**
**पुष्पेष्विष्वासपाशाङ्कुशकरकमलां रक्तवेषातिरिक्ताम् ।**
**दिक्षुद्यद्भिश्चतुर्भिर्मणिमयकलशैः पञ्चशक्त्यञ्चितैः स्व-**
**वृक्षैः क्लृप्ताभिषेकां भजत भगवतीं भूतिदामन्त्ययामे ।।**

क ए ई ल ह्रीं ह स क ह ल ह्रीं स क ल ह्रीं इति मन्त्रः ।।
ऐश्वर्यप्रधानोऽयं मन्त्रः । खण्डत्रयादौ बालाबीजत्रयं क्रमेण योजयेद्वा, सर्वान्ते श्रीबीजं योजयेद्वा, उभयमपि योजयेद्वा ।।

अथ त्रिपुरसुन्दरीमालामन्त्रप्रदर्शनं लिख्यते -

(अस्य श्री त्रिपुरसुन्दरी) मालामन्त्रस्य वरुणादित्य ऋषिः । गायत्री छन्दः । ललिता देवता ।।

ऐं ह्रीं श्रीं ऐं क्लीं सौः नमः, त्रिपुरसुन्दरि, हृदयदेवि, शिरोदेवि, शिखादेवि, कवचदेवि, नेत्रदेवि, अस्त्रदेवि, कामेश्वरि, भगमालिनि, नित्यक्लिन्ने, भेरुण्डे, वह्निवासिनि, महावज्रेश्वरि, परशिवदूति, त्वरिते, कुलसुन्दरि, नित्ये, नीलपताके, विजये, सर्वमङ्गले, ज्वालामालिनि, चित्रे, महानित्ये, परमेश्वरि,

मित्रेशमयि, षष्ठीशमयि, उड्डीशमयि, चर्यानाथमयि, लोपामुद्रामयि, अगस्त्यमयि, कालतापनमयि, धर्मचार्यमयि, मुक्तकेशीश्वरमयि, दीपकलानाथमयि, विष्णुदेवमयि, प्रभाकरदेवमयि, तेजो(मनोज)देवमयि, कल्याणदेवमयि, रत्नदेवमयि, वासुदेवमयि, श्रीरामानन्दमयि,

अणिमासिद्धे, लघिमासिद्धे, महिमासिद्धे, ईशित्वसिद्धे, वशित्वसिद्धे, प्रकाम्यसिद्धे, भुक्तिसिद्धे, इच्छासिद्धे, प्राप्तिसिद्धे, सर्वकामसिद्धे,

ब्राह्मि, माहेश्वरि, कौमारि, वैष्णवि, वाराहि, माहेन्द्रि, चामुण्डे, महालक्ष्मि,

सर्वसंक्षोभिणि, सर्वविद्राविणि, सर्वाकर्षिणि, सर्ववशङ्करि, सर्वोन्मादिनि, सर्वमहाङ्कुशे, सर्वखेचरि, सर्वबीजे, सर्वयोने, सर्वत्रिखण्डे, त्रैलोक्यमोहनचक्रस्वामिनि, प्रकटयोगिनि,

कामाकर्षिणि, बुद्ध्याकर्षिणि, अहंकाराकर्षिणि, शब्दाकर्षिणि, स्पर्शाकर्षिणि, रूपाकर्षिणि, रसाकर्षिणि गन्धाकर्षिणि, चित्ताकर्षिणि, धैर्याकर्षिणि, स्मृत्याकर्षिणि, नामाकर्षिणि, बीजाकर्षिणि, आत्माकर्षिणि, अमृताकर्षिणि, शरीराकर्षिणि सर्वाशापरिपूरकचक्रस्वामिनि गुप्तयोगिनि,

अनङ्गकुसुमे, अनङ्गमेखले, अनङ्गमदने, अनङ्गमदनातुरे, अनङ्गरेखे, अनङ्गवेगिनि, अनङ्गाङ्कुशे, अनङ्गमालिनि, सर्वसंक्षोभणचक्रस्वामिनि गुप्ततरयोगिनि,

सर्वसंक्षोभिणि, सर्वविद्राविणि, सर्वाकर्षिणि, सर्वाह्लादिनि, सर्वसंमोहिनि, सर्वस्तंभिनि, सर्वजृंभिणि, सर्ववशंकरि, सर्वरञ्जिनि, सर्वोन्मादिनि, सर्वार्थसाधके (साधिनि), सर्वसम्पत्तिपूरके(णि), सर्वमन्त्रमयि, सर्वद्वन्द्वक्षयङ्करि सर्वसौमाग्यदायकचक्रस्वामिनि सम्प्रदाययोगिनि,

सर्वसिद्धिप्रदे, सर्वसंपत्प्रदे, सर्वप्रियङ्करि, सर्वमङ्गलकारिणि, सर्वकामप्रदे, सर्वदुःखविमोचनि, सर्वमृत्युप्रशमनि, सर्वविघ्ननिवारणि, सर्वाङ्गसुन्दरि, सर्वसौभाग्यदायिनि, सर्वार्थसाधकचक्रस्वामिनि, कुलोत्तीर्णयोगिनि,

सर्वज्ञे सर्वशक्ते सर्वैश्वर्यप्रदायिनि(प्रदे) सर्वज्ञानमयि सर्वव्याधिविनाशिनि सर्वाधारस्वरूपे सर्वपापहरे सर्वानन्दमयि सर्वरक्षास्वरूपिणि सर्वेप्सितफलप्रदे सर्वरक्षाकरचक्रस्वामिनि निगर्भयोगिनि,

वशिनि कामेश्वरि मोदिनि विमले अरुणे जयिनि सर्वेश्वरि कौलिनि सर्वरोगहरचक्रस्वामिनि रहस्ययोगिनि,

बाणिनि चापिनि पाशिनि अङ्कुशिनि महाकामेश्वरि महावज्रेश्वरि महाभगमालिनि महात्रिपुरसुन्दरि (महाश्रीसुन्दरि) सर्वसिद्धिप्रदचक्र-स्वामिनि अतिरहस्यतरयोगिनि,

श्रीश्रीमहाभट्टारिके सर्वानन्दमयचक्रस्वामिनि परापररहस्ययोगिनि,

त्रिपुरे त्रिपुरेशि त्रिपुरसुन्दरि त्रिपुरवासिनि त्रिपुराश्रीस्त्रिपुरमालिनि त्रिपुरासिद्धे त्रिपुराम्ब महात्रिपुरसुन्दरि महामहेश्वरि महामहाराज्ञि महामहाशक्ते महामहागुप्ते महामहाज्ञप्ते महामहानन्दे महामहास्कन्दे महामहाभाये महामहाश्री(चक्र)नगरसाम्राज्ञि नमस्ते नमस्ते नमस्ते स्वाहा सौः क्लीं ऐं श्रीं ह्रीं ऐं ।।

एषा विद्या महासिद्धिदायिनी स्मृतिमात्रतः ।
अग्निवातमहाक्षोभे रजाराज्यस्य विप्लवे ।।

लुण्टके तस्करभये संग्रामे सलिलप्लवे ।
समुद्रयानविक्षोभे भूतप्रेतादिके भये ।।

डाकिनी-पूतना-यक्ष-रक्षः-कूश्माण्डजे भये ।
अपस्मार-ज्वर-व्याधि-मृत्यून्मादादिजे भये ।।

मित्रभेदे ग्रहभये व्यसने वाभिचारिके ।
अन्येष्वपि च दोषेषु मालामन्त्रं स्मरेन्नरः ।।

सर्वोपद्रवनिर्मुक्तः साक्षात् शिवमयो भवेत् ।
आपत्काले नित्यपूजां विस्तारत्कर्तुमक्षमः ।।
एकवारं जपेदेनं सर्वपूजाफलं लभेत् ।।

इत श्रीविद्यामालामन्त्रः ।।

अथ वनदुर्गाविधानमुच्यते

आरण्यक ऋषिः । अनुष्टुप् छन्दः । वनदुर्गा देवता । दुं बीजम् । स्वाहा शक्तिः ।।

उत्तिष्ठ पुरुष हृत् । किं स्वपिषि शिरः । भयं मे समुपस्थितं शिखा । यदि शक्यमशक्यं वा कवचम् । तन्मे भगवति नेत्रम् । शमय स्वाहा अस्त्रम् ।।

ध्यानम् -

हेमप्रख्यामिन्दुखण्डात्तमौलिं
        शङ्खारीष्टाभीतिहस्तां त्रिणेत्राम् ।
हेमाब्जस्थां पीतवस्त्रां प्रसन्नां
        देवीं दुर्गां दिव्यरूपां नमामि ॥        इति, सात्विकध्यानम् ॥

अरिशङ्खकृपाणखेटबाणान्
        सधनुश्शूलकतर्जनीर्दधाना ।
भवतां महिषोत्तमाङ्गसंस्था
        नवदूर्वासदृशी श्रियेऽस्तु दुर्गा ॥        इति, राजसध्यानम् ॥

चक्रदरखड्ग-खेटक-
        शर-कार्मुक-शूल संज्ञक-कपालैः ।
मुष्टि-मुसल-कुन्त-नन्दक-
        वलय-गदा-भिण्डिपाल-शक्त्याद्यैः ॥

उद्यद्विकृतिभुजाढ्या
        माहिषे सजलजलदसङ्काशा ।
सिंह्मस्था वाऽग्निनिभा
        पद्मस्था वाथ मरतकश्यामा ॥

व्याघ्रत्वक्परिधाना
        सर्वाभरणान्विता त्रिणेत्रा च ।
अहिकलितनीलकुञ्चित-
        कुन्तल-विलसत्किरीट-शशिशकला ॥

सर्पालिवलयनूपुर -
        काञ्ची-केयूर-हारसंभिन्ना ।
सुरदितिजाभयभयदा
        ध्येया कात्यायनी प्रयोगविधौ ॥        इति, तामसध्यानम् ॥

प्रयोगविधौ रक्षा-निग्रहादौ इत्यर्थः ॥

उत्तिष्ठ पुरुषि किं स्वपिषि भयं मे समुपस्थितम् ।
यदि शक्यमशक्यं वा तन्मे भगवति शमय स्वाहा ।।

इति मन्त्रः । उपद्रवशान्तिरक्षाप्रधानोऽयं मन्त्रः ।

पदद्वयसन्धिगुदान्ध्वाधारोदरपार्श्व हृत्स्ततेषु ।
गलदोस्सन्धिवदननासाकपोलदृक्कर्णयुक्भ्रूषु न्यसेत् ।।

इति अक्षरन्यासः । चतुर्लक्षजपः । व्रीहि-तिल-आज्य-हविर्भिः दशांशं पुरश्चरणहोमः ।।

अथ वनदुर्गायन्त्रं कल्पान्तरोक्तं अत्र लिख्यते -

षट्कोणकर्णिकं पद्ममष्टपत्रं सकेसरम् ।
तद्बहिर्द्वादशदलं चतुर्विंशद्दलं पुनः ।।

तद्बहिर्वृत्तयुगलं मध्ये दुं साध्यसंयुतम् ।
दावदुर्गाषडङ्गानि कर्णिकास्थषडश्रिषु ।।

अष्टपत्रेषु विलिखेत् मतिमान्महिषार्दिनीम् ।
दलद्वादशके दावदौर्गवर्णं त्रिशस्त्रिशः ।।

शिष्टं प्रथमपत्रे तु चतुर्विंशद्दले पुनः ।
मालामनोर्वर्णयुग्मं प्रतिपत्रं समालिखेत् ।।

त्रैष्टुभं प्रतिलोमेन तद्बहिः पत्रसन्धिषु ।
वर्तुले प्रथमे वृत्ते अष्टमूर्तीः प्रविन्यसेत् ।।
द्वितीयेऽष्टायुधान्येतद्यन्त्रं दौर्गमनुत्तमम्[1] ।।

---

1. पद्मं भानुदलान्वितं प्रविलिखेत्तत्कर्णिकायां पुन-
स्तारं शक्तिगबीजसाध्यसहितं तत्केसरेषु क्रमात् ।
मर्दिन्या मनुसंभवान् युगलशो वर्णान्पुनः पत्रगा-
न्मन्त्रार्णान्गुणशो विधाय विलिखेदन्त्यं तदन्त्ये दले ।।

मातृकावर्णसंवीतं भूपुरद्वममध्यगम् ।
यन्त्रं श्रीविन्ध्यवासिन्याः प्रोक्तं सर्वसमृद्धिदम् ।।

इति, शारदातिलकोक्तः यन्त्रोद्धारः ।।

अस्यार्थः - प्रथमं षट्कोणं तदन्तः दुं इति विलिखेत् । तत्कोणेषु वनदुर्गाषडङ्गानि विलिखेत् । तद्बहिः अष्टदलं विलिख्य, तेषु "महिषमर्दिनी स्वाहा" इति अष्टाक्षराणि विलिखेत् । तद्बहिः द्वादशदलं विलिख्य तेषु "उत्तिष्ठ" इत्यादि वनदुर्गामन्त्राक्षराणि त्रिशस्त्रिशो विलिखेत् । अवशिष्टं पूर्वदले विलिखेत् । तद्बहिः चतुर्विंशतिदलं विलिख्य, तेषु 'ओं भूर्भुवस्सुवः ज्वज्ज्वालामालिनि सर्वभूतसंहारकारके वरदे वरदे जातवेदसे ज्वल ज्वल प्रज्वल प्रज्वल हुं फट् स्वाहा' इत्यस्य अक्षरद्वन्द्वं विलिखेत् । तद्बहिः पत्रसन्धिषु जातवेदोमन्त्रं प्रतिलोमेन वेष्टयेत् । तद्बहिः वृत्तद्वयं विलिख्य प्रथमे वृत्ते,

दुर्गायै नमः । वरवर्णिन्यै नमः । आर्यायै नमः ।
कनकप्रभायै नमः । कृत्तिकायै नमः । भयदायै नमः ।
कन्यायै नमः । स्वरूपायै नमः । इत्यष्टभिर्वेष्टयेत् ।

द्वितीये - चक्राय नमः । शंखाय नमः । गदायै नमः ।
खड्गाय नमः । पाशाय नमः । अङ्कुशाय नमः ।
शराय नमः । धनषे नमः । इत्येतैर्वेष्टयेत् ।। इति ।।

अथ पूजा -

कर्णिकायां बीजं, द्वादशपत्रेषु षडङ्गोक्तपदावृत्तिद्वयं विलिख्य, प्रथमे वृत्ते त्रिष्टुभायऽऽवेष्ट्य, द्वितीये वृत्ते मातृकया संवेष्ट्य, चतुरश्रकोणेषु दुं इति विलिखेत् ।। अस्मिन्मण्डले नवशक्तिभिः यजेत् इति विवरणे प्रोक्तः ।। मूलदुर्गायाः पीठे समावाह्य समर्चयेत् ।

अङ्गैः प्रथमावृतिः ।

आर्यायै । दुर्गायै । भद्रायै । भद्रकाल्यै । अम्बिकायै । क्षेम्यायै । वेदगर्भायै । क्षेमकार्यै । इति द्वितीयावृतिः ।

अरये । दराय । कृपाणाय । खेटाय । बाणाय । धनुषे । शूलाय । कपालाय । इति तृतीयावृतिः ।

मातृभिः चतुर्थी । लोकेशैः पञ्चमी ।।

अथ प्रयोगविधि --

उद्दिश्य यद्यदेनं मनुं जपेत्सहस्रमयुतं वा ।
तत्तन्मन्त्री लभते त्वरितं तदनुग्रहादसाध्यमिति (मपि) ।।

प्रयोगान्तरम् -

स्नात्वार्काभिमुखस्सन्
नाभिद्वयसेऽम्भसि स्थितो मन्त्री ।
अष्टोर्ध्वशतं प्रजपेत्
निजवाञ्छितसिद्धये च लक्ष्म्यै च ।।

नाभिद्वयसं नाभिप्रमाणम् ।।

प्रयोगान्तरम् -

ध्यात्वा त्रिशूलहस्तां
ज्वरसर्पग्रहविपत्सु जन्तूनाम् ।
संस्पृश्य शिरसि जप्यात्
तर्जन्योपद्रवं शमयेत् ।।

अयमर्थः - ज्वरेण वा सर्पेण वा पिशाचादिना वा पीडितस्य साध्यस्य शिरसि तर्जन्यङ्गुल्या संस्पृश्य त्रिशूलहस्तां वनदुर्गां ध्यात्वा जपेत्, तदुपद्रवनिवृत्तिर्भवति ।।

प्रयोगान्तरम् -

अयुतं तिलैर्वनोत्थैः
राजीभिर्वा हुनेत्समिद्भिर्वा ।
मयूरिकीभिरचिरात्
सोऽपस्मारादिकांश्च नाशयति ।।

वनोत्थतिलं कृष्णतिलं । राजी मोहर्या । मायूरिकी अपामार्गसमित् ।।

अयमर्थः - एतेष्वेकेन अयुतं जुहुयात् । अपस्मारादि पिशाचादि-निवृत्तिर्भवति ।।

प्रयोगान्तरम् -

जुहुयाद्रोहिणसमिधां
अयुतं मन्त्री पुनस्सशुङ्गानाम् ।
सर्वापदां विमुक्त्यै
सर्वसमृध्यै ग्रहादि शान्त्यै च ।

रोहिणं वटम् । सशुङ्गं साग्रमित्यर्थः ।

अयमर्थः - शत्रुशान्त्यर्थं च पिशाचादि शान्त्यर्थं च अयुतं साग्राभिर्वटसमिद्भिः जुहुयात् इति ।।

प्रयोगान्तरम् -

आर्कैः समित्सहस्रैः
प्रतिजुहुयादर्कवारमारभ्य ।
दशदिनतोऽर्वाक् वाञ्छित-
सिद्धिर्देव्याः प्रसादतो भवति ।।

आर्कं रुयी । अर्कवारभारभ्य दशदिनं नित्यशः सहस्रं जुहुयादित्यर्थः ।

प्रयोगान्तरम् -

शुद्धैस्सारैरिध्मैः
त्रिदिनं वा सप्तरात्रकं वाथो ।
प्रतिशकलं प्रतिजुहुया-
न्मनुना निजवाञ्छिताप्तये मन्त्री ।।

सारं वैंकै । प्रतिशकलं प्रतिलोगशकलम् पृष्ठाग्रं अथवा शकलं प्रत्येकैकेन कुर्यात् इत्यर्थः । "सङ्ख्यानुक्ते सहस्रभि"ति न्यायात् सारसमिद्भिः सहस्रं जुहुयात् निजवाञ्छितसिद्धये ।।

प्रयोगान्तरम् -

विशिखानां त्रिशत्कं
पुरो निधायाथ तीक्ष्णतैलेन ।
जुहुयात्सहस्रकं वाऽयुत-
मपि सङ्ख्यासु पूरितासु पुनः ।।

सम्पातिततैलेन च
शरान्समभ्यज्य पूर्ववज्जप्यात् ।
तानय शूरो धन्वी
शुद्धाचारः प्रवेधयेद्बाणान् ।।

प्रतिसेनया मध्ये
सा धावति सद्य एव सम्भ्रान्ता ।
भूयो गुरुं धनैरपि
धान्यैः परिपूरयेच्च कारयिता ।।

विशिखं तीर । तीक्ष्णतैलं कडुघेण्णे ।

प्रयोगान्तरम् -

अष्टोत्तरशतं जप्तं
यच्छिरसि प्रक्षिपेच्चिताभस्म ।
स तु विद्विष्टो लोकैः
देशाद्देशान्तरं परिभ्रमति ।।

चिताभस्म शमशानभस्म ।

प्रयोगान्तरम् -

कारस्करस्य पत्रैः
अष्टसहस्रं निपातितैर्मरुता ।
जुहुयात्सपादपांसुभिः
उच्चाटकरं भवेद्रिपोस्सद्यः ।।

कारस्करं विषमुष्टि । अयमर्थः - स्वयमेव पतितैः कारस्करपत्रैः अष्टोत्तरसहस्रं साध्यस्य पादपांसुयुक्तैः जुहुयात् । रिपोः उच्चाटनं भवति ।

प्रयोगान्तरम् -

**सेनां संस्तम्भयितुं**
**विषतरुसुमनस्सहस्रकं जुहुयात् ।**
**तावद्भिस्तत्पत्रैः**
**प्रन्त्री (?) सेनां निवर्तयति ॥**

विषतरुसुमनः विषमुष्टीचें पुष्प ।

अयमर्थः-विषतरुपुष्पैः परसेनास्तम्भनार्थं, तत्पत्रैः परसेनोच्चाटनार्थं च सहस्रं जुहुयात् ।

प्रयोगान्तरम् -

**स्ववसारक्तोपेतैः जुहुया-**
**त्पत्रैरुलूकवायसयोः ।**
**मृतयेऽरातेर्मत्त-**
**स्तून्मत्तसमित्सहस्रहोमेन ॥**

**संस्थापितानिलां तां**
**प्रतिकृतिमुष्णोदके विनिक्षिप्य ।**
**प्रजपेदुन्मादः स्यात्**
**शत्रोर्दुग्धाभिषेकतः (शान्तिः) ॥**

उन्मत्तसमित् तराच्या समित् ।

साध्यनामयुक्तेनानेन मन्त्रेण उन्मत्तसमित्सहस्रहोमात् साध्यः उन्मत्तो भवति । पुनरपि तेनैव उन्मत्तशकलेन साध्यप्रतिकृतिं निर्माय तस्यां प्राणप्रतिष्ठां च कृत्वा, तां उष्णोदके विनिक्षिप्य, तां स्पृष्ट्वा मन्त्रं साध्यनामयुतं जपेत् । शत्रोः उन्मादो भवति ॥

अथ कादिमताख्ये नित्यातन्त्रे "प्रोक्तेन" प्रकारेण सर्वत्र प्रतिकृति-निर्माण लक्षणं उच्यते -

साध्यजन्मांशकं ज्ञात्वा, चन्द्रांशकेषु चेत् षोडशाङ्गुलां, सूर्यांशकेषु चेत् द्वादशाङ्गुलां अन्यांशकेषु अश्विन्यादिषु नवसु नक्षत्रेषु चेत् चतुर्दशाङ्गुलां, मखादिषु नवसु चेत् अध्यार्धत्रयोदशांगुलां, मूलादिषु नवसु चेत् त्रयोदशाङ्गुलां च प्रतिकृतिं कुर्यात् । तत्र सर्वत्र स्वाष्टमांशेन शिरोदेशं, तावता वक्षःतावता जठरं, तावता नाभेराकटिबन्धं तद्द्वैगुण्यादूरु, तावता जङ्घे प्रपदौ च यथावयवशोभं विदध्यात् । एवं सर्वत्र प्रतिकृतिनिर्भाणविधानमुक्तम् । पुनः तच्छान्तिः कर्तव्या चेत् क्षीरेण तां प्रतिकृतिमभिषिञ्चेत् ।

प्रयेगान्तरम् -

**रविबिम्बगतामरुणां**
**करयुगपरिक्लृप्तशूलतर्जनीकाम् ।**
**ध्यात्वाऽयुतं प्रजप्यात्**
**मारयितुं सद्य एव रिपुनिवहम् ।।**

तर्जनी तर्जन्यङ्गुली । अयमर्थः - उक्तलक्षणां देवीं सूर्यमण्डले ध्यात्वा, तस्यास्तर्जन्या अधस्तात् साध्यं च ध्यात्वा अयुतं जपेत् । उक्तफलं भवति ।।

प्रयोगान्तरम् -

**असिखेटधरार्कस्था**
**क्रुद्धा मारयति सैष जपविधिना ।**

अत्रापि अयुतसङ्ख्याजपः ।।

प्रयोगान्तरम् -

**सिह्मस्था बाणधनुष्करा**
**समुच्चाटयेदरीनचिरात् ।**

अयमर्थः - दुर्गायाः पुरतः धावमानं शत्रुं, धावन्तीं च तां ध्यात्वा अयुतं जपेत् । उच्चाटनं भवति ।

प्रयोगान्तरम् -

विषतरुसमिदयुतहुतादथ
करिणी रोगिणी भवत्यचिरात् ।
तत्पर्णैश्च विनाशः
तेषामुच्चाटनं च तत्पुष्पैः ।।

विषतरु कुचली । विषतरुसमिद्भिः अयुतं जुहुयात् । गजानां रोगो भवति । विषतरुपत्रैः अयुतं जुहुयात् । गजानां मरणं भवति । विषतरुपुष्पैः अयुतं जुहुयात् । गजानां उच्चाटनं भवति ।।

प्रयोगान्तरम् -

**आनित्यसमिद्धोमात्**
**रोगा नश्यन्ति दन्तिनामचिरात् ।**

आनित्यं अनिच्चै दन्ती-गजः ।

प्रयोगान्तरम् -

**तत्पुष्पैर्मधुरात्तैः**
**होमाच्च वशीभवन्ति मातङ्गाः ।**

अयमर्थः - अनित्यपुष्पैः त्रिमधुरसिक्तैः "सङ्ख्यानुक्ते सहस्रमिति" न्यायात् सहस्रं जुहुयात् । गजाः वशीभवन्ति ।।

प्रयोगान्तरम् -

**त्रिमधुरसिक्तैः अनित्य-**
**पत्रैः मत्ता भवन्ति ते सद्यः ।**

अनित्यं अनिच्चै ।

अयमर्थः - त्रिमधुरसिक्तैः अनित्यपत्रैः सहस्रं जुहुयात् । गजानां मदो भवति ।

**रक्षाकरस्तु करिणां**
**तज्जापितपञ्चगव्यलेपस्स्यात् ।।**

प्रयोगान्तरम् -

**आज्य-तिल-राज्यनित्यक-**
**दौग्धोदन-पञ्चगव्य-तण्डुलैः ।**
**सघृतैश्च प्रत्येकं**
**सहस्रहवनं गजाश्ववर्धनकृत् ।।**

राजी मोहरया । अनित्यकं अनिच्चै । निम्बमिति केचित् । आज्याद्यैः आज्यान्तैरष्टद्रव्यैः एतैः प्रत्येकं सहस्रं हुनेदित्यर्थः ।।

प्रयोगान्तरम् -

**द्विजभूरुहं महान्तं**
**छित्वा निर्भिद्य पञ्चधा भूयः ।**
**आशाक्रमेण पञ्चा-**
**युधा विधेयाश्च साधु शिल्पविदा ।।**

**शङ्खः सनन्दकोऽरिः**
**शाङ्र्गः कौमोदकी दिशाक्रमतः ।**
**पञ्चेति पञ्चगव्ये**
**निधाय जप्याच्च पञ्चसाहस्रम् ।।**

**तावत् घृतेन जुहुयात्**
**तेष्वथ संपाद्य साधु संपातम् ।**
**पुनरपि तावज्जप्त्वा**
**मध्याद्यवटेषु पञ्चगव्ययुतम् ।।**

संस्थाप्य समीकृत्य च

बलिं हरेत्तत्र तन्मन्त्रैः ।

पुरराष्ट्रग्रामाणां

कार्या रक्षैवमेव मन्त्रविदा ।।

यस्मिन्देशे विहिता

रक्षेयं तत्र वर्धते लक्ष्मीः ।

धनधान्यसमृद्धिः स्यात्

रिपुचोराद्याश्च नैव बाधन्ते ।।

अयमर्थः - द्विजभूरुहं पलाशम् । द्विजभूरुहवृक्षमेकं छित्वा, तस्य वृक्षरूपेणावस्थानसमये पूर्वदिक्स्थो यः पार्श्वः तत्पार्श्वं पृथक् छित्वा, तेन शङ्खं संपाद्य, पुनः तस्य दक्षिणदिक्स्थो यः पार्श्वः तमपि पृथक् छित्वा तेन नन्दकायुधं संपाद्य, पुनः तस्य पश्चिमदिक्स्थखण्डेन चक्रायुधं संपाद्य, पुनस्तस्य उत्तरदिक्स्थखण्डेन शाङ्र्गायुधं संपाद्य, पुनस्सर्वमध्य-खण्डेन कौमोदक्यायुधं संपाद्य, तानेवं संपाद्य, पुनरेतान् पञ्च पञ्चगव्ये निधाय सर्वान्सह स्पृष्ट्वा, वनदुर्गामन्त्रं विष्णुपञ्चरोक्ततत्तदायुधमन्त्रांश्च पञ्चसहस्रं जपेत् । पुनः पञ्चसहस्रसङ्ख्यं घृतेन हुत्वा तत्संपातं गृहीत्वा आयुधानां सम्पातस्पर्शनं कुर्यात् । पुनरपि पूर्ववदेव पञ्चायुधानि स्पृष्ट्वा वनदुर्गामन्त्रं तत्तन्मन्त्रं च पञ्चसहस्रसङ्ख्यं जपेत् । पुनः साध्यस्थले चतुर्दिक्षु मध्ये च पञ्चकुण्डानि खनित्वा, तेषु पूर्वादि क्रमेण शङ्खाद्यायुधानि पञ्चगव्ययुतानि स्थापनीयानि । पुनस्तानि कुण्डानि पिधाय, पुनः तत्र तत्र तत्तदायुधमन्त्रैः, "शङ्खाय नमः" इत्यादिभिः बलिं हरेत् । अक्षतादि द्रव्यैः पुनः मूलमन्त्रोक्तवदेव सर्वत्र पूजा । पुनः, आयुधानां समीपे स्थित्वा स्तोत्रमपि कुर्यात् ।

कुन्देन्दुनीकाशमशेषपाप-

रक्षोविषघ्नं वरधीरनादम् ।

आस्यानिलापूरितमच्युतस्य

शङ्खं सदा शरणमहं प्रपद्ये ।।

प्रभासयन्तं भुवनं महान्तं
सुपुष्करं पुष्कराक्षोद्धृतं च ।
विद्यामयं नन्दकनामधेयं
खड्गं सदाहं शरणं प्रपद्ये ।।

सहस्रसूर्यप्रतिमांशुजाल-
स्फुरद्घमद्वह्निशिखावृतं च ।
भ्रमत्कराग्रे यदरिष्टनेमेः
चक्रं सदा शरणमहं प्रपद्ये ।।

येनाखिलं विश्वमिदं सुगुप्तं
हत्वारिसङ्घान् परेमेश्वरेण ।
समस्तदेवासुरदुर्निरीक्ष्यं
शाङ्गं सदा शरणमहं प्रपद्ये ।।

सविस्फुलिङ्गान्वमतीं समन्तात्
अग्नीनशेषासुरदैत्यहन्त्रीम् ।
कौमोदकीं वामकरे निषण्णां
अमूं सदा शरणमहं प्रपद्ये ।।

एवं कृते उक्तफलं भवति ।

प्रयोगान्तरम् -

पद्मोत्पलकुमुदहुतैः नृपपत्नीर्ब्राह्मणान् वशीकुरुते ।

अयमर्थः '- उत्पलं नीलोत्पलं । कुमुदं श्वेतोत्पलम् । पद्मशतहोमात् नृपा वशगा भवन्ति । उत्पलशतहोमात् नृपस्त्रियो वशीभवन्ति । कुमुदशतहोमात् ब्राह्मणा वशगा भवन्ति ।।

प्रयोगान्तरम् -

कल्हारलोणहोमैः विट्शूद्रौ जातिभिस्तथा ग्रामम् ।।
कल्हारं रक्तोत्पलम् । लोणं मीठे । जाती जायी ।।

अयमर्थः - कल्हारशतहोमैः वैश्या वशगा भवन्ति । लोणशतहोमात् शूद्राः वशगा भवन्ति । जातीकुसुमशतहोमात् ग्रामो वशगो भवति ।।

प्रयोगान्तरम् -

**अथ वारिदग्गदाम्बुजकरं**
**मुकुन्दं विचिन्त्य रविबिम्बे ।**
**व्यत्यस्तपुरुषि भगवति**
**पदमनुं जपतु सर्वसिद्धकरम् ।।**

अयमर्थः - चतुर्भुजं विष्णुं सूर्यमण्डले ध्यात्वा वनदुर्गामन्त्रं जपेत् । तत्र "उत्तिष्ठ पुरुषि" इत्यत्र ईकारान्तसंबुद्धिस्थाने "उत्तिष्ठ पुरुष" इति अकारान्तसंबुद्धिं योजयित्वा जपेत् । पुनः "तन्मे भगवति" इत्यत्रापि पुंलिङ्गसंबुद्ध्या योजयित्वा जपेत् । एवं जप्ते अभीष्टसिद्धिर्भवति ।।

प्रयोगान्तरम् -

**साध्याख्याक्षरगर्भितं मनुमिमं पत्रे लिखित्वा च तत्**
**चक्रीहस्तमृदा कृतप्रतिकृतेर्विन्यस्य मन्त्री हृदि ।**
**सप्ताहं त्वथ पुत्तलीं अभिमुखेऽवस्थाप्य सन्ध्यात्रये**
**जप्यादष्टशतं चिराय वशतां गच्छत्यसौ निश्चयः ।।**

अयमर्थः - कर्णिकायां साध्यनाम लिखित्वा, तद्बहिः अष्टदलं विलिख्य, तेषु वनदुर्गामन्त्रवर्णान् विभागशो विलिख्य, तद्यन्त्रं तालपत्रे लिखित्वा, कुलालहस्ताश्लिष्टमृदा निर्मितायाः साध्यप्रतिकृतेः हृदि विन्यस्य, तां प्रतिमां पुरतः संस्थाप्य, सप्तदिनं त्रिसन्ध्यासु अष्टोत्तरशतं जपेत् । एवं जप्ते साध्यो वशी भवति ।।

प्रयोगान्तरम् -

**व्रीहीणां जुहुयान्नरोऽष्टशतकं संवत्सराद्व्रीहिमान्**
**गोदुग्धैः पशुमान्घृतैः कनकवान्दध्ना च सर्वर्धिमान् ।**
**अन्नैरन्नसमृद्धिमांश्च मधुभिः स्याद्रत्नवान्दूर्वया-**
**प्यायुष्मान् प्रतिपद्युतेन महतीं सद्यः श्रीयं प्राप्नुयात् ।।**

अयमर्थः - एतैरुक्तैर्द्रव्यैः अष्टशतसङ्ख्यं दिनशो हुनेत् । तत्तत्फलं भवति । दूर्वया तु सामान्येन आयुष्मान् भवति । प्रतिप्रतिपदं हुतया लक्ष्मीर्भवति ।।

अथ वनदुर्गाविधानमन्त्रप्रसङ्गात् बगलामुखीदुर्गामन्त्रोऽपि कल्पान्तरोक्तोऽत्र लिख्यते -

नारायण ऋषिः । (तृ)त्रिष्टुप् छन्दः । बगलामुखीदुर्गा देवता ।। ओं ह्लीं हृत् । बगलामुखि शिरः । सर्वदुष्टानां शिखा । वाचं मुखं पदं स्तम्भय कवचम् । जिह्वां कीलय नेत्रम् । बुद्धिं विनाशय अस्त्रम् ।

ध्यानम् -

गम्भीरां च मदोन्मत्तां तप्तकाञ्चनसन्निभाम् ।
चतुर्भुजां त्रिणयनां कमलासनसंस्थिताम् ।।

मुद्गरं दक्षिणे पाशं वामे जिह्वां च वज्रकम् ।
पीताम्बरधरां सान्द्रवृत्तपीनपयोधराम् ।।

हेमकुण्डलभूषां च पीतचन्द्रार्धशेखराम् ।
पीतभूषणभूषां च स्वर्णसिंहासनस्थिताम् ।।

एवं ध्यात्वा च देवेशीं शत्रुस्तम्भनकारिणीम् ।
महादिव्यां महामायां साधकेन्द्रफलप्रदाम् ।।

जपेदिति वाक्यशेषः ।।

ओं ह्लीं ह्लीं बगलामुखी सर्वदुष्टानां वाचं मुखं पदं स्तम्भय जिह्वां कीलय बुद्धिं विनाशय ह्लीं ह्लीं ओं स्वाहा । इति, षट्त्रिंशदक्षरोऽयं मन्त्रः । वियत्पृथिव्यक्षरयुक्तं द्वितीयं बीजम् । स्तम्भनप्रधानोऽयं मन्त्रः । अयुतं जपेत् । दशांशं पीतद्रव्यैः हुनेत् । पीतद्रव्यं हरिद्रा ।।

अथ पूजा -

**मध्ये योनिं समालिख्य तद्बाह्ये तु षडश्रकम् ।**
**तद्बाह्येऽष्टदलं बद्मं तद्बाह्ये षोडशच्छदम् ।।**
**चतुरश्रत्रयं बाह्ये चतुर्द्वारोपशोभितम् ।।**

एवं पूजाचक्रं विलिख्य, तस्मिन् भुवनेश्वरीपीठं सम्पूज्य, तस्मिन् बगलामुखीं समर्चयेत् । अङ्गैः प्रथमावृतिः ।।

गणेशाय । वटुकाय । योगिन्यै । क्षेत्रपालाय । इति पूर्वदक्षिणपश्चिमोत्तरेषु गुरु - परमगुरु - परमेष्ठिगुरु - परात्परगुरून् आग्नेयादि कोणेषु च समर्चयेत् ।।

पुनः, बगलामुख्यै । स्तम्भिन्यै । जम्भिन्यै । मोहिन्यै । वश्यायै । अचलायै । बलायै । दुर्धरायै । कल्मषायै । धीरायै । कल्पनायै । कालकर्षिण्यै । भ्रामिकायै । मन्दगमनायै । भोगायै । योगायै । एता षोडशस्वरवर्णैः एकैकपूर्विकाः षोडशपत्रेषु समर्चनीयाः ।।

तदन्तः अष्टपत्रेषु भुवनेशीबीजपूर्विकाः ब्राह्म्याद्यास्समर्चनीयाः ।।

पुनः, डां डाकिन्यै । रां राकिण्यै । लां लाकिन्यै । कां काकिन्यै । शां शाकिन्यै । हां हाकिन्यै नमः । इति षट्कोणेषु समर्चयेत् । एवं विलिखितेऽपि षट्कोणाष्टदल-षोडशदलक्रमेण पूजाक्रमः ।

पुनः तद्बहिरिन्द्रादयः । तद्बहिर्वज्राद्यश्च समर्चयेत् (समर्चनीयाः) । योन्याख्यत्रिकोणमध्ये मूलदेवीं च समर्चयेत् ।

अथ प्रयोगः -

**हरितालं हरिद्रां च लवणेनैव संयुतम् ।**
**स्तंभने होमयेद्देवी प्रज्ञां चैव गतिं मतिम् ।।**

हरितालं तत्संज्ञमेव । हरिद्रं हरिद्राचूर्णम् । एतत् त्रयं मिलित्वा हुनेदित्यर्थः ।।

प्रयोगान्तरम् -

**हरिद्राहरितालाभ्यां जुहुयाल्लवणं निशि ।**
**स्तम्भयेत्पञ्चदिव्यानि नात्र कार्या विचारणा ।।**

**स्तम्भनेषु च सर्वेषु प्रयोगः प्रत्ययावहः ।**
**अथवा पीतपुष्पैर्वा त्रिमध्वक्तैश्च होमयेत् ।।**

अस्यार्थः - हरिद्राचूर्णैश्च हरितालचूर्णैश्च संयुतैर्लवणैः हुनेत् । पञ्चदिव्यानि - "तलग्न्यापो विषं कोशो दिव्यानीह विशुध्ये" ।। - इति पञ्चदिव्यानि । पीतपुष्पाणि यानि कानिचित् पीतकुसुमानि ।।

प्रयोगान्तरम् -

हरिद्राचूर्णैः महिष्याज्यसिक्तैः पश्चिमाभिमुखः रात्रौ अष्टोत्तरसहस्रं हुत्वा, आज्याहुतीश्च माहिषाज्यैरेव हुत्वा, तत्संपातं च विलोड्य, नीलकेरमुखं छित्वा, तस्मिने गृहीत्वा, शत्रोरागतिमार्गे वा प्रतिसेनायाः सभागतिमार्गे वा निखाय स्थापयेत् । शत्रुस्तंभनं भवति इति कल्पान्तर-प्रोक्तमन्त्रार्थतो लिखितम् ।।

अथ बगलामुखीमन्त्रप्रसङ्गात् भद्रकालीमन्त्रोऽपि कल्पान्तरोक्तश्च योग्यतावशात् लिख्यते -

भद्रकालीमन्त्रस्य ईश्वर ऋषिः । त्रिष्टुप् छन्दः । श्रीभद्रकाली देवता ।।

लां बीजम् । श्रीं कीलकम् । मम शत्रुसंहरार्थे विनियोगः । लां इत्यादि षडङ्गम् ।।

ध्यानम् -

**या भस्मोध्दूलिताङ्गी भुगजपरिवृता व्याघ्रचर्मोत्तरीया**
**निर्मांसी मांसभक्षी विध्तनरशिरोबद्धमाला कराली ।**

**चामुण्डा रक्तकंठी शवशयनरता बद्धमुण्डप्रचण्डा**
**निःशङ्का कोटराक्षी भयदुरितहरी भद्रकाली प्रसन्ना ।।**

लां लीं लूं काली कपालि स्वाहा ।। इति मन्त्रः ।।

अथ दृष्टिदोष-जिह्वादोष-शान्तिकरो दुर्गामन्त्रः कल्पान्तरोक्तः, अत्र योग्यतावशात् लिख्यते -

ह्रीं दुं दुर्गे भगवति मनोगृहमन्मथ मथ जिह्वापिशाचीरुत्सादयेत् सादय हितदृष्टि-अहितदृष्टिपरदृष्टि-सर्पदृष्टि-सर्वदृष्टिविषं नाशय नाशय हुं फट् स्वाहा ।। इति मन्त्रः ।।

अथ सुखप्रसवकरयक्षिणिमन्त्रोऽपि लिख्यते -

ब्रह्मा ऋषिः । अनुष्टुप् छन्दः । यक्षिणी देवता ।
हिमवत्युत्तरे पार्श्वे सुरसा नाम यक्षिणी ।
तस्या नूपुरशब्देन विशल्या भवतु गर्भिणी स्वाहा । (इति मन्त्रः)

अनेन मन्त्रेण तैलं दूर्वाग्रेण स्पृष्ट्वा जप्त्वा गर्भिणीं प्राशयत्, प्रसववेदनासमये । शीघ्रं प्रसोष्यते ।।

अथ शीघ्रप्रसवार्थं मन्त्रान्तरमपि अत्र कल्पान्तरोक्तं योग्यतावशात् लिख्यते -

ओं क्षीं क्षौं क्षय इति मन्त्रः ।।

तैले मायाबीजं विलिख्य, अनेन मन्त्रेण दूर्वाग्रेण स्पृष्ट्वा, एकविंशतिवारं वा अष्टोत्तरशतं वा अष्टोत्तरसहस्रं वा अभिमन्त्र्य, तत्तैलं प्रसववेदनासमये स्त्रियं पाययेत् । शीघ्रं प्रसोष्यते ।

अथ प्रसङ्गात् रतिमन्त्रोऽपि गणपतिविषयोक्तोऽत्र योग्यतावशात् लिख्यते -

वामदेव ऋषिः । देवी गायत्री छन्दः । रतिविद्या देवता ।। क्लीं बीजम् । ईं शक्तिः ।। आं क्लां हृत् । ईं क्लीं शिरः । इत्याद्यङ्गानि ।।

ध्यानम् -

हेमाभां दिव्यवस्त्रां स्तनभरनमितां दिव्यमाल्याङ्गरागां
हस्ताग्रद्वन्द्वनीलोत्पलकुसुमधरां फुल्लकल्हारनेत्राम् ।
हृद्याङ्गीं सुप्रसन्नां मणिकनकमहाभूषणैर्भूषिताङ्गीं
पञ्चेषु प्राणनाथां प्रणतभयहरां मारविद्यां नमामि ।।

ईं क्लीं नमो भगवति रतिविद्ये महामोहिनि कामेशि सर्वलोकवशं कुरु कुरु स्वाहा । इति मन्त्रः द्वात्रिंशदर्णः । सहस्त्रं जपेत् । अथास्य यन्त्रं -

तिर्यक्तथोर्ध्वं शररत्नरेखाः
क्रमेण मन्त्रं परितस्त्रिशूलम् ।
कामाख्यमायावृतपूर्णवाह्यं
जगद्वशक्षोभविमोहयन्त्रम् ।।

यन्त्रमेतन्महावीर्यममोघं सर्वसिद्धिदम् ।
तालपत्रे समालिख्य पूज्य जप्त्वा सपल्लवम् ।।

अष्टोत्तरशतं मन्त्री स्वेष्टद्वारोपरि न्यसेत् ।
योषिद्वा पुरुषो वापि तत्क्षणात् स्ववशं व्रजेत् ।।

वधूनां वामपादाङ्कपांशूनादाय मन्त्रवित् ।
तस्मिन्यन्त्रमिदं लिख्य पूज्य जप्त्वा यथा पुरा ।।

तद्गृहात्स्वगृहान्तं तन्मन्त्रवित् विकिरेत् शनैः ।
तन्मार्गेणैव सा योषा समायाति ध्रुवं क्षणात् ।।

तथैव पुरुषाकर्षं दक्षपादाङ्कपांशुना ।
अथवाऽऽकर्षभेदेन वक्ष्यमाणेन साधयेत् ।।

जन्तूनामङ्गजेष्वेकमादाय रतिविद्यया ।
तत्र तत्प्राणमावाह्य विधिवत् साधकोत्तमः ।।

तद्यन्त्रमध्ये संस्थाप्य जपेदष्टोत्तरं शतम् ।
त्रिदिनात्साधकेन्द्रस्य वशमायान्ति जन्तवः ।।

एवं तु कामिनी कुर्यात् कामिनं कामसिद्धये ।
कामी च कामिनीं चापि स्त्रीस्त्रियं पुरुषं पुमान् ।। इति ।।

अस्यार्थः - शररत्नरेखा इति । शराः पञ्चशराः । रत्नं नवरत्नानि । मायेति ईकारः । पल्लवमिति मन्त्रान्ते हुं फडिदि तत्तत्क्रियोचितपदयोजनम् । ईकारादि मन्त्रवर्णान् कोष्ठेषु, बीजद्वयेन बाह्ये च वेष्टयेत् ।।

अथ इन्द्राणीमन्त्रः मन्त्रसारोक्तः अत्र लिख्यते -

बृहस्पति ऋषिः । गायत्री छन्दः । इन्द्राणी देवता ।। ह्रीं क्लीं हृत् । इन्द्राणि शिरः । सौभाग्यदेवते शिखा ।। मघवत्प्रिये कवचम् । सौभाग्यं नेत्रत्रयम् । देहि मे स्वाहा अस्त्रम् ।।

ध्यानम् -

कल्पद्रूद्यानमध्ये विविधमणिलसन्मण्डपान्तर्विराज-
न्मातङ्गाराति-पीठ-प्रविलसितसरोजन्मसंस्थां प्रसन्नाम् ।
पीनोतुङ्गस्तनार्तां पृथुजघनभरां पद्मपत्रायताक्षीं
इन्द्राणीमिन्द्रनीलोत्पलशकलनिभां हृद्यभूषां नमामि ।।

ह्रीं क्लीं इन्द्राणि सौभाग्यदेवते मघवत्प्रिये सौभाग्यं देहि मे स्वाहा । इति मन्त्रः । सौभाग्यलक्ष्मीप्रधानोऽयं मन्त्रः । लक्षं जपेत् । रक्तपद्मैः त्रिमधिरसिक्तैर्वा रक्तोत्पलैः तत्सिक्तैर्वा वकुलकुसुमैर्वा (लोणैः) कैरवैर्वा, त्रिमधुरसिक्तैरेतेषु एकेन दशांशं जुहुयात्, पुरश्चरणहोमः ।। रक्तोत्पलं रक्तकुमुदम् । वकुलं धोलसरी । लोणं-लवणम् । कैरवं-आम्बल् ।।

अथ पूजा -

कान्त्यै । प्रभायै । रमायै । विद्यायै । मदनायै । मदनातुरायै । रम्यायै । मनोज्ञायै । हृद्यायै । इत्यष्टदलेषु च, नवमीं कर्णिकायां च समभ्यर्च्य, ह्रीं सर्वशक्तिकमलासनाय नमः । इति कर्णिकायां समभ्यर्च्य, तस्मिन्पीठे इन्द्राणीं समावाह्य समर्चयेत् ।

अङ्गैः प्रथमावृतिः ।

ऊर्वश्यै । मेनकायै । रम्भायै । प्रम्लोचायै । पुञ्जिकस्थलायै । तिलोत्तमायै । घृताच्यै । सुरूपायै । इति द्वितीयावृतिः ।

इन्द्रादिभिस्तृतीया । वज्रादिभिश्चतुर्थी ।।

अथ प्रयोगः -

जुहुयाच्चम्पककुसुमैः प्रातर्वश्याजनं वशे कर्तुम् ।
चन्दनपङ्कस्नपितैः सायं नवमालिकाप्रसूनैर्वा ।।

पलाशपुष्पैर्मधुरत्रयाक्तै-
रिष्टाय दातुं जुहुयात्सहस्रम् ।
कन्यां वरायाथ वरोऽपि तद्व-
न्निजेप्सितामाशु वशे विधातुम् ।।

लाजाभिरञ्जलिमिताभिरथाष्टसङ्ख्यं
वह्नौ जुहोतु विधिवत् घृतसंप्लुताभिः ।
कन्यां हृदाभिलषितामचिरेण लब्धुं
सौभाग्यधेनुधनधान्यसुताप्तये च ।।

अस्यार्थः - चन्दनसिक्तैर्नवमालिकापुष्पैर्वा त्रिमधुरसिक्तैः पलाशपुष्पैर्वा सहस्रसङ्ख्यं जुहुयात् सायङ्काले, इष्टाय पुरुषाय कन्यां दातुम् । अञ्जलिमिताभिरष्टसङ्ख्यं जुहुयात् । वाञ्छितां कन्यां लभते । सौभाग्यादींश्च लभते । नवमालिका-मल्लिकापुष्पम् ।।

प्रयोगान्तरम् -

आदाय दोष्णा प्रतिपादयन्तीं
वराय कन्यामभिवाञ्छिताय ।
सुरेन्द्रकान्तां प्रविचिन्त्य जप्यात्
कन्याप्रदानाय सहस्रसङ्ख्यम् ।।

अयमर्थः - एवं ध्यात्वा जप्त्वा कन्यापिता कन्यादानभाग्यं लभते ।

प्रयोगान्तरम् -

कन्यापि नित्यं कृतकर्णवेधा
विद्यां प्रजप्यादथ तत्वसङ्ख्यम् ।
सौभाग्यहृद्यं महनीयवेषं
वरं लभेत त्रिदशेन्द्रतुल्यम् ।।

तत्त्वसङ्ख्यम् - चतुर्विंशतिसङ्ख्यम् ।।

अस्यैव यन्त्रमाह -

षट्कोणकर्णिकामध्ये ससाध्यं भुवनेश्वरीम् ।
आलिखेत् षट्सु कोणेषु षडर्णं कोणसन्धिषु ।।

अङ्गान्यष्टसु पत्रेषु गुणशः स्यान्मनोः क्रमात् ।
द्वौ द्वौ स्वरौ केसरेषु गारं शक्तिं च दिक्ष्वपि ।।

इन्द्राणीयन्त्रमेतत्तु परं त्रैलोक्यरञ्जनम् ।
सौभाग्यशोभा-सौन्दर्य-धन-धान्य-श्रुतप्रदम् ।।

अयमर्थः - प्रथमं षट्कोणं विलिख्य, तत्कर्णिकायां भुवनेशीं विलिख्य, तन्मध्ये साध्यनामादीन् विलिखेत् । पुनः कोणसन्धिषु अङ्गषट्कं विलिखेत् । पुनः, तद्बहिः अष्टपत्रं पद्मं विलिख्य, तत्केसरेषु द्वौ द्वौ स्वरौ विलिख्य, तद्दलमध्ये मन्त्रवर्णान् त्रीणि त्रीणि

अक्षराणि विलिखेत् । पुनः चतुरश्रं विलिख्य, तस्य दिक्षु "क्लीं" इति विलिख्य, तत्कोणेषु "ह्रीं" इति विलिखेत् । एवं विलिख्य धृते उक्तफलं भवति ।

प्रयोगान्तरम् -

**वदनक्षालन-मज्जन-मभिषेका-लेपनादिकं चापि ।**
**एनां प्रजप्य कुर्यात्सौभाग्यायुषे समृद्ध्यै च ।।**

अथ स्वप्नवाराहीमन्त्रोऽपि कल्पान्तरोक्तोऽत्र लिख्यते -

ईश्वर ऋषिः । अनुष्टुप् छन्दः । श्रीस्वप्नवाराही देवता ।।
ऐं बीजम् । ह्रीं शक्तिः । ठ ठ ठ ठ स्वाहा कीलकम् ।।

ऐं हृत् । नमो वाराहि शिरः । अघोर शिखा । स्वप्ने कवचम् । ठ ठ ठ ठ नेत्रम् । स्वाहा अस्त्रम् । एतैरेव पदैः कटिकण्ठगण्डश्रोत्रनेत्रमूर्धसु न्यसेत् ।।

ध्यानम् -

**नीलाञ्जनगिरिश्यामां मणिरत्नविभूषिताम् ।**
**अश्वारूढां च वाराहीं पाशाङ्कुशधरां शिवाम् ।।**

**कामरूपां महादेवीं खड्गखेटकधारिणीम् ।**
**चतुर्भुजां तीक्ष्णदंष्ट्रां दंष्ट्राग्रस्थवसुन्धराम् ।।**

**दुष्टसंहारणोद्युक्तां साधकानां वरप्रदाम् ।**
**चिरं निरन्तरं भक्त्या समुपासे सनातनीम् ।।**

ऐं ह्रीं नमो वाराहि अघोरे स्वप्ने ठ ठ ठ ठ स्वाहा । इति अष्टादशार्णोऽयं मन्त्रः ।।

**शृणु नारद तत्त्वेन साधना यादृशी भवेत् ।**
**सोपवासःशुचिर्भूत्वा कृष्णस्यैकतमे तिथौ ।।**

पूजयेद्देवदेवेशीं नैवेद्यं च निवेदयेत् ।
ततो जपं प्रकुर्वीत अष्टोत्तरसहस्रकम् ।।

समाहितमना भूत्वा ततस्सिद्धश्च साधयेत् ।
भूतं भव्यं भविष्यं च सर्वं सा वक्ति तस्य च ।।
सा दापयति साध्यस्य स्वप्नेषूक्त्वा मनोगतम् ।।

प्रार्थनाप्रकारः -

नमस्ते स्वप्नवाराहि स्वप्ने कथय मे रिपोः ।
महाभयं च जनय भक्ते मयि कृपां कुरु ।।

प्रसह्य पीडयेत् क्षिप्रं यो यथा साध्यते मया ।
पाशबद्धं नुद क्षिप्रं चित्तमाकर्षयाङ्कुशात् ।।

दुःखं वारय खेटेन मदीयमतिदुस्तरम् ।
छिन्धि नः खड्गतो मृत्युं कथयस्व शुभाशुभम् ।।
स्वयमागत्य नः साध्यः प्रणम्याज्ञां करोत्वयम् ।।

इति प्रार्थनाप्रकारः ।।

अथ प्रयोगः -

भूर्जे वा ताम्बूलदले वा विद्यामुन्मत्तरसेन वशपदसहितां लिखित्वा, हृदये विन्यस्य, पुष्पादिनाऽभ्यर्च्य, प्राणप्रतिष्ठां कृत्वा, महाज्वालाप्रयोगेण तन्मयं कृत्वा वामपादेनाक्रम्य त्रिसन्ध्यं अष्टोत्तरशतं च जपेत् । दिनसप्तकात् वश्यं भवति ।।

स्त्रियो वा पुरुषो वापि प्राणैरपि धनैरपि ।
यावज्जीवं साधकानां वशीभवति दासवत् ।।

महाभस्माकृतिं वामपादेनाक्रम्य संजपेत् ।
प्रयच्छस्वामुकस्येष्टं स्त्रीरत्नं ग्रामपूर्वकम् ।।

राजानं मोहनं कृत्वा वशयेदवधीरयेत् ।
महाभस्माकृतिं कृत्वा हृदि वामाङ्गुलिर्जपेत् ।।

अष्टोत्तरसहस्रं च स्वप्ने तं भीषयेच्चलम् ।
दास्यति ह्यमुकस्येदं सर्वैरपि मनोरथम् ।।

अथ स्वप्नवाराहीमन्त्रप्रसङ्गात् अन्नपूर्णेश्वरीमन्त्र उच्यते -

वैश्रवण ऋषिः । अनुष्टुप् छन्दः । अन्नप्रदायिके भूश्रियौ देवते । ग्लौं बीजम् । श्रीं शक्तिः ।

ग्लां श्रां अन्नं मह्यं हृत् । ग्लीं श्रीं अन्नं मे देहि शिरः । इत्यादि युक्तं-अन्नाधिपतये शिखा । ममान्नं प्रदापय कवचम् । स्वाहा अस्त्रम् ।।

दुग्धाब्धौ रूप्यवप्रावृतकनकमयद्वीपवर्ये सुराढ्ये
कल्पद्रुद्यानकाधो मणिमयलसिते वित्तपस्याग्रभागे ।
आसीने भूश्रियौवाञ्छितवसुनिचयं मन्त्रिणे संसृजन्त्यौ
मन्त्री सञ्चिन्तयानो जपति दिनमुखे संपदेऽन्नस्य मन्त्रम् ।।

तत्र, सुराढ्ये - देवैर्निबिडीकृते इत्यर्थः ।

अन्नं मह्यं अन्नं मे देहि अन्नाधिपतये ममान्नं प्रदापय स्वाहा ।। इति मन्त्रः । अयुतद्वितयं जपेत् । आज्येन च अन्नेन च पृथगेकैकेन च सहस्रं हुनेत्, पुरश्चरणहोमः ।।

वैष्णवपीठे पूजा । अङ्गैः प्रथमावृतिः । पृथिव्यादि पञ्चभूतैर्द्वितीया । बलाक्यादिभिः श्रीविधानोक्ताभिः तृतीया । इन्द्रवज्रादिभिरपरे द्वे ।।

अथ अन्नपूर्णेश्वरीमन्त्रप्रसङ्गात् अश्वारूढामन्त्र उच्यते -

दीर्घतमा ऋषिः । गायत्री छन्दः । अश्वारूढा देवता ।। आं बीजम् । ह्रीं शक्तिः । क्रों कीलकम् । (प्रणवभुवनेश्यौ वा बीजशक्ति - स्वाहा वा शक्तिः ।) वश्यप्रधानोऽयं मन्त्रः ।

प्रणवपाशाभ्यां हृदयम् । शक्त्या शिरः । क्रों शिखा । एहि कवचम् । परमेश्वरि नेत्रम् । स्वाहा अस्त्रम् ।। (आं हृत् । ह्रीं शिरः । क्रों शिखा । आं कवचम् । ह्रीं नेत्रम् । क्रों अस्त्रम् । इति वा)

ध्यानम् -

अश्वारूढा कराग्रैर्नवकनकमयीं वेत्रयष्टिं दधाना
दक्षोऽन्येनानयन्ती स्फुरिततनुलतां पाशबद्धां सुसाध्याम् ।
देवी नित्यं प्रसन्नाननशशधरबिम्बा त्रिणेत्राभिरामा
दद्यादाद्यानवद्यां प्रवरसुखफलप्राप्तिहृद्यां श्रियं वः (नः) ।।

कल्पान्तरोक्तध्यानं उच्यते -

उत्तुङ्गतुरगारूढे करोद्यत्पाशदण्डिनि ।
नारीलोकमशेषं मे वशमानय पार्वति ।।

ध्यानान्तरम् -

रक्तामश्वाधिरूढां नवकनकमयीं वेत्रयष्टिं दधानां
पाशेनाबध्य साध्यां स्मरशरविवशां दक्षिणेनानयन्तीम् ।
नानाकल्पाभिरामामरुणकिरणसंकाशवस्त्रां प्रसन्नां
देवीं ध्यायेज्जगन्मोहनवशकरणीं पार्वतीं साधकेन्द्रः ।।

ओं आं ह्रीं क्रों एहि परमेश्वरि स्वाहा ।। इति मन्त्रः त्र्योदशार्णः ।। अयुतं जपेत् । आज्येन सहस्रं पुरश्चरणहोमः ।

अथ पूजाविधिः -

भुवनेशीविधानोक्ते पीठे समावाह्य समर्चयेत् । अङ्गैः प्रथमावृतिः । मातृभिः द्वितीया । इन्द्रादिभिस्तृतीयावृतिः ।।

अथ प्रयोगः -

ध्यातापि गिरिसुतेयं जगतीं विश्वां वशीकरोत्यनिशम् ।।

विद्याऽनुदिनहृद्यायाऽनया होमकर्म वरहेमदायि तत् ।।

"द्रव्यानुक्ते घृत"मिति न्यायात् घृतैस्सहस्रं हुनेदित्यर्थः ।।

प्रयोगान्तरम् -

कामितां सपदि वामलोचनां आनयेदधिकमारपीडिताम् ।।

प्रयोगान्तरम् -

**हवनक्रिया सपदि वश्यकरी मधुरावसेकपटुना ।**

अयमर्थः - पटु मीठ । त्रिमधुरसिक्तैर्लवणैर्हुनेद्वश्यार्थम् ।।
सदृशो न कश्चन जगत्यपरो मनुनामुनाऽऽनयनकर्मविधौ ।। इति मन्त्रप्रशंसा कृता ।।

अथ रेणुकामन्त्रः रेणुकाकल्पोक्तप्रकारेण लिख्यते -

भार्गव ऋषिः । पङ्क्तिः छन्दः । रेणुका देवता । क्लीं बीजम् । स्वाहा शक्तिः ।। क्लां हृत् । क्लीं शिरः । इत्याद्यङ्गानि ।।

ध्यानम् -

**वामे शूलकपालयुग्ममितरे खड्गं क्वणड्डिण्डिमं**
**विभ्राणां करपङ्कजैस्त्रिणयनां नागाष्टभूषोज्ज्वलाम् ।**
**नानाकोटियुगान्तसूर्यसदृशां नानाज्वलद्भूषणां**
**दक्षालम्बितवाममुद्रितपदां श्रीरेणुकामाश्रये ।।**

क्लीं नमो भगवति रक्तपञ्चमि रेणुकादेवि दह दह पच पच अखिलजनं मे वशं कुरु स्वाहा क्लीं । इति, अष्टत्रिंदर्णो मन्त्रः । अयुतं जपः । अरविन्दादि कामबाणप्रसूनैः दशांशं होमः ।।

अथ मन्त्रः -

**षट्त्रिंशत्कोष्ठके यन्त्रे रेणुकामन्त्रमुत्तमम् ।**
**लिखित्वा क्लीं तु शूलाग्रे साध्यनामादिसंयुतम् ।।**

घृते लिख्य इदं यन्त्रं जप्त्वा मन्त्रं सहस्त्रकम् ।
पिबेद्वन्ध्या सुपुत्रार्थी(र्थे) पुत्रिणी भवति ध्रुवम् ।।

वटाग्रं निम्बबीजं च स्तन्येन पयसा पिबेत् ।
गर्भं प्रसूयते वन्ध्या दैवकोपाच्च मुच्यते ।।

प्रयोगान्तरम् -

अङ्कोलमूलवल्कं तु चूर्णयित्वा गुडेन युक् ।
काकाण्डतुल्यमश्नीयात् पुत्रिणौ सा भविष्यते ।।

अङ्कोलं वृक्षविशेषः ।

अश्वत्थमूलं संगृह्य बन्दाकां वा पयोयुताम् ।
पिबेत्तदुभयं वापि प्रशस्तं गर्भधारणे ।।

वन्दाकं - पुल्लारी हिमणताहेत् ।।

पिष्ट्वा शिरीषपुष्पाग्रं पयोघृतसमन्वितम् ।
ततः स्नाता पिबेद्वन्ध्या लभते गर्भमुत्तमम् ।।

शिरीषस्य पुष्पाग्रं, इति, शिरीषस्य पुष्पं च तदग्रं चेत्यर्थः ।। शिरीषपुष्पं - वाघेयपुष्पम् ।।

सहदेवीश्रयोर्मूलं पिष्ट्वा चाग्रसमन्वितम् ।
पिबेत्क्षीरेण नारीणां गर्भलाभाय शस्यते ।।

सहदेवी - श्रीदेवीयार - शंकलनीर । श्री - श्रीताल ।।

सप्तपर्ववचां पिष्ट्वा दापयेत् कृमिनाशने ।
संपिष्ट्वा वज्रवल्लीं च नवनीतेन दापयेत् ।।

कृमिः पतति देवेशि द्विदिनादायतेक्षणे ।।

कृमिः इति - बन्ध्यात्वकारकः कृमिः इत्यर्थः । वज्रवल्लीमङ्गरोली । सर्वत्र मूलमन्त्रेण जपश्च ।।

प्रयोगान्तरम् -

अग्निं ज्वल्यार्कसमिधा आसुरीमर्कदुग्धकम् ।
तन्नाम्ना जुहुयाच्छत्रुः स्फोटकान्म्रियते ध्रुवम् ।।

तन्नाम्ना इति, साध्यनामयुतेन मूलमन्त्रेणेत्यर्थः । आसुरी-मोहर्या ।

आसुरीं क्षीरसंयुक्तां जुहुयाच्च निवृत्तये ।।

प्रयोगान्तरम् -

अर्काग्नावासुरीं चैव कटुत्रयसमन्वितम् ।
अर्कक्षीरं च लवणं तैलाक्तं जुहुयाद्व्रती ।।
सप्ताहान्म्रियते शत्रुः नात्र कार्या विचारणा ।।

कटुत्रयं - शुण्ठी, मिरे, पिप्पिली ।

आसुरीमश्वरोमाणि एकीकृत्य हुनेद्व्रती ।
अष्टोत्तरशतावृत्त्या सोऽपस्मारेण गृह्यते ।।

घृतेन जुगुयाद्देवी स्वस्थो भवति नान्यथा ।
आसुरीं लवणं चैव अष्टोत्तरशतं हुनेत् ।।

ज्वरेण पीड्यते शत्रुः स्वस्थो निम्बघृतैर्भवेत् ।
आसुरीनिम्बपत्राणि अष्टोत्तरशतं हुनेत् ।
स्फोटकैर्गृह्यते शत्रुः स्वस्थो होमात् घृतस्य तु ।।

आसुरीव्याघ्ररोमाणि एकीकृत्य हुनेद्व्रती ।
शिरोभ्रमणमेवं स्यात् शत्रोः क्षीरेण शाम्यति ।।

आसुरीखररोमाणि एकीकृत्य हुनेद्व्रती ।
अपस्मारो भवेच्छत्रोः स्वस्थः क्षीरेण सुन्दरि ।।

मार्जारस्य तु रोमाणि आसुरीं यस्तु हूयते ।
अष्टोत्तरशताच्छत्रुः भवेत्पङ्गुर्महेश्वरि ।।
औदुम्बरस्य क्षीरेण स्वस्थो भवति नान्यथा ।।

निग्रहवश्यप्रधानोऽयं मन्त्रः । प्रयोगः सन्तानप्रधानश्च ।।

अथ सन्तानप्रकरणप्रसङ्गात् अथर्वणभद्रकालीमन्त्र उच्यते -

प्रत्यङ्गिरा ऋषिः । अनुष्टुप् छन्दः । अथर्वणभद्रकाली देवता । क्षं बीजम् । हं शक्तिः । फट् कीलकम् । (मम) सर्वभूतविनाशार्थे विनियोगः ।।

क्षां हृत् । क्षीं शिरः । इत्याद्यङ्गानि ।।

ध्यानम् -

ध्यायेत्समस्तशत्रुघ्नीं सर्वसौख्यदयालयाम् ।
कालीं करालवदनां कालजीमूतसन्निभाम् ।।

भीमदंष्ट्रां ज्वलन्नेत्रीं भूयोज्वालाशिखोज्ज्वलाम् ।
अष्टनागकृताकल्पामष्टदिक्पूर्णविग्रहाम् ।।

सहस्रभुजदण्डोद्यत्सहस्रायुधशोभिताम् ।
बिभ्रतीं किङ्किणीमालामापादतललम्बिकाम् ।।

समस्तशत्रुरुधिरपानोन्मत्तां परां शिवाम् ।
एवं ध्यात्वा महाकृत्यां जपेन्मन्त्रं यथाविधि ।।

मूलमन्त्रः - क्षं भक्ष ज्वालाजिह्वे करालदंष्ट्रे प्रत्यङ्गिरे क्षं ह्रीं हुं फट् । इति, विंशत्यक्षरो मन्त्रः । चतुष्षष्टिसहस्रसङ्ख्यं जपं कृत्वा, दशांशं तर्पणं, दशांशं आज्यहोमः ।। पश्चात्प्रयोगविधिः ।। (जपदशांशो होमः - तद्दशांशं तर्पणमिति विधिः)

ह्रीं नमः कृष्णवाससे, शतसहस्रकोटिसिंह्यासने सहस्रवदने, अष्टादशभुजे, महाबले, महाबलपराक्रमे, अजिते, अपराजिते, देवि महाप्रत्यङ्गिरे, प्रत्यङ्गिरसेऽन्यपरकर्मविध्वंसिनि, परमन्त्रोच्चाटिनि, परमन्त्रोत्सादिनि, सर्वभूतदमनि, कें सौं प्रें ह्रीं क्रों मां सर्वोपद्रवेभ्यः सर्वापद्भ्यो रक्ष रक्ष ह्रां ह्रीं क्षों क्रो सर्वदेवानां मुखं स्तम्भय स्तम्भय सर्वविघ्नं छिन्धि छिन्धि सर्वदुष्टान् भक्षय भक्षय वक्त्रालयज्वालाजिह्वे करालवदने सर्वयन्त्राणि स्फोटय स्फोटय शृङ्खलान् त्रोटय त्रोटय प्रत्यसुरसमुद्रान् विद्रावय विद्रावय सं रौद्रमूर्ते महाप्रत्यङ्गिरे महाविद्ये शान्तिं कुरु कुरु मम शत्रून् भक्षय भक्षय ओं ह्रां ह्रीं ह्रूं जंभे जंभे मोहे मोहे स्तंभे स्तंभे ओं ह्रीं हुं फट् प्रत्यङ्गिरे स्वाहा । इति, मालामन्त्रः ।।

अथ अथर्वणभद्रकालीमन्त्रप्रसङ्गात्, देवीमाहात्म्य-प्रोक्त नवाक्षरीविधानं लिख्यते -

मार्कण्डेय ऋषिः । विराट् छन्दः । महिषमर्दिनी देवता ।।
ह्रां चण्डिकायै हृत् । ह्रीं चण्डिकायै शिरः ।। इत्याद्यङ्गानि ।

ध्यानम् -

**त्रिशिखदलितरक्षोऽधीशवक्षोविनिर्य-**
**द्वहळरुधिरधारादिव्यमाध्वीरसौघम् ।**
**वदनमुपनयन्ती सिंह्यपृष्ठाधिरूढा**
**हरतु भगवती मे दुःखचिन्तां दुरन्ताम् ।।**

ऐं ह्रीं क्लीं चामुण्डायै विच्चे । इति नवाक्षरीमन्त्रः ।।

अथ यन्त्रम् -

षट्कोणमध्ये मन्त्रस्य बीजत्रयं अविशिष्टाक्षराणि कोणेषु च लिखेत् । हं इति देवीमाहात्म्यमूलबीजम् ।।

देवीमाहात्म्य प्रतिश्लोकं पायसैस्तिलैः सर्पिषा पञ्चामृतैश्च जुहुयात् ।। (पञ्चामृतं नाम, "पीयूषदध्याघाराख्यं मध्विक्षुरसपञ्चकम्" इति ।।)

**।। इति श्रीमहाराजतुलजेन्द्रविरचित**
**मन्त्रशास्त्रसङ्ग्रहे देवीविषयो नाम चतुर्थोऽध्यायः ।।**

**।। श्रीदेव्यर्पणमस्तु ।।**

## ।। पञ्चमोऽध्यायः ।।

अथ नवाक्षरीमन्त्रप्रसङ्गात् ज्वरमन्त्रो लिख्यते -

ज्वरमन्त्रस्य कालाग्नि ऋषिः । अनुष्टुप् छन्दः । कालज्वरो देवता । ओं बीजम् । ज्वरः शक्तिः । ज्वरशमनार्थे विनियोगः ।।

रक्तं त्रिणेत्रं त्रिपदं त्रिहस्तं
त्रिशूलिनं रुद्रसुतं कृशाङ्गम् ।
भस्मायुधं चक्रशशाङ्कमौलिं
ध्यायेत्समस्तं त्रिपदं ज्वरं तम् ।।

त्रिपादहस्तनेत्राय त्रिशीर्षाय नमो नमः ।
ज्वराय व्याधिराजाय दक्षारेः श्वासमूर्तये ।।

ओं त्रिपाद्भस्मप्रहरणस्त्रिशिरा रक्तलोचनः ।
स मे प्रीतस्सुखं दद्यात्सर्वामयपतिर्ज्वरः ।।

कुबेरं ते मुखं रौद्रं नन्दिमानन्दिमावह ।
ज्वरं मृत्युं भयं घोरं ज्वरं नाशय मे ज्वर ।।

भस्मायुधाय विद्महे एकदंष्ट्राय धीमहि ।
तन्नो ज्वरः प्रचोदयात् ।।

अथ ज्वरमन्त्रविधानप्रसङ्गात् धन्वन्तरिमन्त्रो लिख्यते -

अपान्तरतमा ऋषिः । त्रिष्टुप् छन्दः । धन्वन्तरिर्देवता ।। ओं बीजम् । स्वाहा शक्तिः । सर्वरोगविनाशनार्थे विनियोगः ।। ओं नमो भगवते हृत् । धन्वन्तरये शिरः । अमृतकलशहस्ताय शिखा । सर्वामयविनाशनाय कवचम् । त्रिलोकनाथाय नेत्रम् । विष्णवे स्वाहा अस्त्रम् ।।

ध्यानम् -

**शङ्खं चक्रं जलूकां दधदमृतघटं चापि दोर्भिश्चतुर्भिः**
**सूक्ष्मस्वच्छातिहृद्यां शुकपरिविलसन्मौलिमम्भोजनेत्रम् ।**
**कालाम्भोदोज्ज्वलाङ्गं कटितटविलसच्चारुपीताम्बराढ्यं**
**वन्दे धन्वन्तरिं तं निखिलगदवनप्रौढदावाग्निलीलम् ।।**

ओं नमो भगवते धन्वन्तरये अमृतकलशहस्ताय सर्वामयविनाशनाय त्रिलोकनाथाय विष्णवे स्वाहा ।। इति एकचत्वारिंशदक्षरो मन्त्रः ।।

अक्षरन्यास उच्यते -

**शीर्षालकश्रुतिविलोचनघोणगण्ड-**
**दन्तोष्ठपाणिपदसन्धिषु साग्रकेषु ।**
**आधारनाभिजठरस्तनपृष्ठहृत्सु**
**मन्त्राक्षराणि शितधीर्न्यसतु क्रमेण ।।**

एवं अक्षरन्यासं कृत्वा लक्षं जपेत् । आज्यसिक्तैः पायसैर्वा पयस्सिक्ताभिर्दूर्वाभिर्वा दशांशं पुरश्चरणहोमः ।। रोगनिवृत्तिप्रधानोऽयं मन्त्रः ।।

अथ धन्वन्तरिमन्त्रप्रसङ्गात् घण्टाकर्णमन्त्रोऽपि अत्र योग्यतावशात् लिख्यते -

**घण्टाकर्ण महाप्राज्ञ सर्वोपद्रवनाशन ।**
**स्फोटकानां रुजं प्राश्य रक्ष रक्ष महाबल ।।**

अनेन मन्त्रेण मसूरीशान्त्यर्थं भस्मादि जपेत् । (अस्य यन्त्रम् -)

**कर्णिकायां लिखेत्तारं क्रमात्पत्रेषु चाष्टसु ।**
**घण्टाकर्णस्य वर्णास्तान् चतुरश्चतुरो लिखेत् ।।**

**मातृकार्णैश्च संवेष्ट्य साध्याख्यांमध्यतो लिखेत् ।**
**एतच्च घण्टाकर्णस्य यन्त्रं स्फोटविमोचकम् ।।**

**स्वर्णादिपट्टे संलिख्य धारयेद्यो यथाविधि ।**
**तस्य स्फोटा विनश्यन्ति नात्र कार्या विचारणा ।।**

कार्पासबीजफलीकरणाभ्यां हुनेच्च । फलीकरणं कोंहा ।।

अथ घण्टाकर्णमन्त्रप्रसङ्गात् वैश्रवणमन्त्र उच्यते -

ओं वैश्रवणाय स्वाहा । ओं पक्वाशाय स्वाहा । ओं पिङ्गलाय स्वाहा । ओं निधिपाय स्वाहा । ओं वित्तेशाय स्वाहा । ओं कुबेराय स्वाहा । ओं भूः स्वाहा । ओं भुवः स्वाहा । ओं सुवः स्वाहा । ओं भूर्भुवस्वः स्वाहा । एते दश कुबेरमन्त्रः । ऋष्यादयः प्रसिद्धाः ।

**वित्तेशस्यान्तराले दशवटसमिधस्सर्पिषाक्ता विविक्ताः**
**होतव्या द्रव्यसिध्यै कनकघटकरण्डात्तदोस्तुन्दिलोऽसौ ।**
**हेमाभो रत्नदीपोदलकमलनिधिद्योतिते हेमपीठे**
**ध्येयो न्यग्रोधमूले हुतभुजि विदुषा वैश्वदेवावसाने ।।**

**मन्त्रैरेतैर्घृतयुतपायसहोमोऽपि मन्त्रिणां विहितः ।**
**लक्ष्म्यै सघृतैश्च तिलैर्बिल्वसमिद्धोमतस्तदेव फलम् ।।**

अस्यार्थः - वटसमिधो दशसङ्ख्यमाज्यसिक्ता वैश्रवणमन्त्रेषु "वित्तेशाय स्वाहा" इत्यनेन मन्त्रेण जुहुयात् ।

प्रयोगान्तरम् -

वैश्वदेवावसानेऽग्नौ घृतसिक्तेन पायसेन जुहुयाल्लक्ष्म्यै । घृतसिक्तैस्तिलैश्च बिल्वसमिद्भिश्च जुहुयाल्लक्ष्म्यै ।।

अथ गन्धर्वप्रवरचित्रसेनादि मन्त्रोऽपि मन्त्रदेवताप्रकाशिकोक्तप्रकारेण अत्र योग्यतावशाल्लिख्यते -

ब्रह्मा ऋषिः । विराट् छन्दः । गन्धर्वो देवता । क्लीं हृत् । राजन् शिरः । गन्धर्व शिखा । गगनाश्रय कवचम् । चित्रसेन नेत्रम् । कन्यां प्रयच्छ में स्वाहा अस्त्रम् ।।

ध्यानम् -

द्वादशस्त्रीपरिवृतं सुरसङ्घपुरस्सरम् ।
कामदं चित्रसेनाख्यं कन्यादानसुदीक्षितम् ।।

वन्दे गन्धर्वराजानां मणिमालाविराजितम् ।
सुधर्माधिष्ठितं नित्यं शुद्धचामीकरप्रभम् ।।

मन्दारपुष्पसुमनोहरकेशपाशं
वामभ्रुवं ललितविग्रहमप्रमेयम् ।
वन्दे च नित्यमभिराममनङ्गतुल्यं
आलोलकुन्तलमथाब्जदलायताक्षम् ।।

क्लीं राजन् गन्धर्व गगनाश्रय चित्रसेन कन्यां प्रयच्छ मे स्वाहा ।। इति मन्त्रः । षण्मासं नित्यमष्टोत्तरशतं जपेत् । इष्टां कन्यां लभते ।।

लाजैः पुष्पैर्घृतैर्होमात् नित्यं द्वाविंशकं परम् ।
द्वादशं तर्पणं नित्यं विधिरेष भवेत्सदा ।।
तस्मै सर्वप्रयत्नेन कन्यां दद्यात्स देवराट् ।।

अथ बृहस्पतिमन्त्र उच्यते -

ब्रह्मानुष्टब्बृहस्पतय ऋष्यादयः । ब्रां हृत् । ब्रीं शिरः । इत्याद्यङ्गम् ।। ब्रं बृहस्पतये नमः । इति मन्त्रः । अष्टसहस्रं जपेत् । सर्पिरिसिक्तेनान्नेन दशांशं पुरश्चरणहोमः । पूजायां, अङ्गेन्द्रवज्रादिभिः आवरणत्रयम् ।

ध्यानम् -

रत्नस्वर्णांशुकादीन् निजकरकमलाद्दक्षिणादाकिरन्तं
वासोराशौ निधायापरममरगुरुं पीतवस्त्रादिभूषम् ।
ध्यायन्नासीनमप्यापणभुवि शतसङ्ख्यं सविंशत्कमेवं
भीतापुष्पैर्वृताक्तैस्त्रिदिनमथ हुनेत्स्वर्णवस्त्रादि सिध्यै ।।

अयमर्थः - एवंरूपं बृहस्पतिं ध्यात्वा घृतसिक्तैर्भीतापुष्पैः विंशत्युत्तरशतसङ्ख्यं त्रिदिनं हुनेत् स्वर्णादि सिध्यै । भीतापुष्पं लज्जालुकाप्रसूनं इति सत्संप्रदायसर्वस्वे उक्तम् ।।

अथ बृहस्पतिमन्त्रप्रसङ्गात् शुक्रमन्त्र उच्यते -

ब्रह्मा ऋषिः । विराट् छन्दः । शुक्रो देवता । ओं बीजम् । स्वाहा शक्तिः । बीजेन वा मन्त्रपदैर्वा अङ्गानि ।।

वस्त्रं मे देहि शुक्राय स्वाहा । इति मन्त्रः ।।

अयुतं जपेत् । आज्येन सहस्रं हुनेत् । पुरश्चरणहोमः । अङ्गेन्द्रवज्रादिभिरावरणपूजा ।

अथ प्रयोगः -

**शुक्रास्ये शुक्रपुष्पैर्हुतभुजि गुणशस्सप्तशो वैकविंश-**
**द्वारं होतव्यमेषोऽप्यतिसितकुसुमालेपनो वामदोष्णा ।**
**वासो रत्नानि कार्तस्वरमपि सततं साधकाय प्रयच्छन्**
**ध्येयो व्याख्यानमुद्राकलितपरकरस्त्वापणालिन्दसंस्थः ।।**

तत्र अलिन्दमिति वेदिका ।

अस्यार्थः- शुक्रास्ये शुक्रवारे शुक्रपुष्पैः रलयोरभेदात् शुक्लपुष्पैः त्रिभिस्त्रिभिः पुष्पैर्वा सप्तभिस्सप्तभिः पुष्पैर्वा एकविंशतिवारं हुनेत् । उक्तप्रकारेण ध्यात्वा । तस्मिन् वासो रत्नानि प्रदास्यति । तत्र गुणशः एकविंशद्वारहोमो मालतीमल्लिकाजातिभिः । जाति जायपत्री । सप्तशः एकविंशद्धोमः पङ्कज - कुमुद - कल्हार - कुन्द - मन्दार - नन्द्यावर्त - जवन्तिकाभिः । मिश्रहोमपक्षे द्विचत्वारिंशदाहुतिसङ्ख्याः । अमिश्रहोमपक्षे दशाधिकद्विशतसङ्ख्या आहुतयः । अमिश्रस्तु एकैकविधपुष्पहोमः ।।

अथ शुक्रादि मन्त्रप्रसङ्गात् मन्त्रदेवताप्रकाशिकोक्ता इतरग्रहमन्त्रा उच्यन्ते -

अङ्गारकमन्त्रस्य ब्रह्मा ऋषिः । गायत्री छन्दः । अङ्कारको देवता । अं बीजम् । आय शक्तिः । बीजेनैव षडङ्गानि ।

ध्यानम् -

**नमाम्यङ्गारकं देवं रक्ताभं वरभूषणम् ।**
**जानुस्थवामहस्ताढ्यं साभयेतरपाणिनम् ।।**

अं अङ्गारकाय नमः । इति मन्त्रः ।

अष्टसहस्रं जपः । आज्येन दशांशं होमः । केवलपद्मे समावाह्य समर्चयेत् । अङ्गैः प्रथमावृतिः । नवग्रहैर्द्वितीयावृतिः । इन्द्रादिभिस्तृतीया । एवं संपूज्येत् ।।

अथ अङ्गारकमन्त्रप्रसङ्गात् बुधमन्त्रो लिख्यते

बुधमन्त्रस्य ब्रह्मा ऋषिः । पङ्क्तिः छन्दः । बुधो देवता । बुं बीजम् । आय शक्तिः । बीजेनैव षडङ्गानि ।

ध्यानम् -

**वन्दे बुधं सदा देवं पीताभं वरभूषणम् ।**
**जानुस्थवामहस्ताढ्यं साभयेतरपाणिनम् ।।**

बुं बुधाय नमः । इति मन्त्रः । अङ्गग्रहदिक्पालैरावरणत्रयेण पूजाविधिः । अक्षरसहस्रं जपः । आज्येन दशांशं होमः ।।

अथ बुधमन्त्रप्रसङ्गात् शनैश्चरमन्त्रो लिख्यते -

शनैश्चरमन्त्रस्य ब्रह्मा ऋषिः । गायत्री छन्दः । शनैश्चरो देवता । शं बीजम् । आय शक्तिः । बीजेनैव षडङ्गानि ।

ध्यानम् -

**वन्दे शनैश्चरं दंष्ट्रावज्रनीलाभभूषणम् ।**
**जानुस्थवामहस्ताढ्यं साभयेतरपाणिनम् ।।**

शं शनैश्चराय नमः । इति मन्त्रः । अक्षरसहस्त्रं जपः । आज्येन दशांशं होमः । अङ्गग्रहदिक्पालैः पूजा ।।

अथ शनैश्चरमन्त्रप्रसङ्गात् राहुमन्त्र उच्यते -

राहुमन्त्रस्य ऋष्यादिकं वक्ष्यमाणकेतुमन्त्रवत् । रां राहवे नमः । इति मन्त्रः । पूजादिकं पूर्ववत् ।

अथ राहुमन्त्रप्रसङ्गात् केतुमन्त्रो लिख्यते -

केतुमन्त्रस्य ब्रह्मा ऋषिः । पङ्क्तिः छन्दः । केतुर्देवता । कें बीजम् । पः शक्तिः । बीजेनैव षडङ्गानि ।। (वः शक्तिः इति प्रपञ्चसारसारसङ्ग्रहे ।)

ध्यानम् -

**वन्दे केतुं कृष्ण (चित्र)वर्णं वराभरणभूषितम् ।**
**जानुस्थवामहस्ताढ्यं साभयेतरपाणिनम् ।।**

कें केतवे नमः । इति मन्त्रः ।।

अक्षरसहस्त्रं जपः । आज्येन दशांशं होमः । पूजादिकं पूर्ववत् ।

स्वस्ववारे जप-पूजा-तर्पण-होमादीनि तत्तद्ग्रहप्रीतिकराणि सर्वसम्पत्कराणि च भवति ।।

अथ केतुमन्त्रप्रसङ्गात् व्यासमन्त्र उच्यते -

व्यासमन्त्रस्य ब्रह्मानुष्टाब्व्यासा ऋष्यादयः । व्यां बीजम् । नमश्शक्तिः । बीजेन दीर्घस्वरयुक्तेनाङ्गानि । व्यां वेदव्यास नमः । इति मन्त्रः[1] ।

---

1. मन्त्रस्य जपः ध्यानानन्तरमेव ।

ध्यानम् -

**मुनिव्रातावीतं मुदितधियमम्भोजरुचिर-**
**द्युतिं व्याख्यामुद्राकलितविलसद्दक्षिणकरम् ।**
**परं जोनौ कृत्वा दृढकलितकक्ष्यं कविवरं**
**समासीनं व्यासं स्मरत निरतं पुण्यचरितम् ।।**

अष्टसहस्रं जपेत् । आज्यसिक्तेन पायसेन दशांशं पुरश्चरणहोमः । कविता - प्रज्ञा - व्याख्या - श्रीप्रदानप्रधानोऽयं मन्त्रः ।।

अथ व्यासमन्त्रप्रसङ्गात् शङ्करनारायणमन्त्रविधानं मन्त्रदेवताप्रकाशिकोक्तप्रकारेण लिख्यते -

नारद ऋषिः । अनुष्टुप् छन्दः । हरिहरो देवता । ह्रौं बीजम् । ह्रीं शक्तिः । ह्रां हृत् । ह्रीं शिरः । इत्याद्यङ्गानि ।।

**शूलं चक्रं पाञ्चजन्यं कपालं दधतं करैः ।**
**स्वस्वभूषार्त(र्ध) नीलार्धदेहं हरिहरं भजे ।।**

ओं ह्रौं ह्रीं शङ्करनारायणाय नमः ओं ह्रौं ह्रीं । इति मन्त्रः ।

प्रणव-ह्रौमित्यक्षर-हृल्लेखा-चतुर्थ्येकवचनान्तशङ्करनारायणशब्दः नमश्शब्दः, पुनः प्रणव-ह्रौमित्यक्षरहृल्लेखावसानोऽयं हरिहरमन्त्रः । लक्षं जपेत् । आज्यसिक्तपायसेनायुतं हुनेत् पुरश्चरणार्थम् ।।

अथ शङ्करनारायणमन्त्रप्रसङ्गात् अर्धनारीश्वरचिन्तामणिमन्त्रविधानं उच्यते -

काश्यप ऋषिः । अनुष्टुप् छन्दः । उमेशो देवता । अर्धनारीश्वरो वा देवता । रं बीजम् । ओं शक्तिः । रं हृदयम् । कं शिरः । षं शिखा । मं कवचम् । रं नेत्रम् । यं अस्त्रम् ।।

ध्यानम् -

अहिशशिधरगङ्गाबद्ध तुङ्गाप्तमौलिः
त्रिदशगणनताङ्घ्रिः त्रीक्षणः स्त्रीविलासः ।
भुजगपरशुशूलान् खड्गवह्नी कपालं
शरमपि धनुरीशो बिभ्रदव्याच्चिरं वः ।।

उमेशपक्षे इदं ध्यानम् । अर्धनारीश्वरपक्षे तु ध्यानान्तरम् -

हावभावललितार्धनारिकं भीषणार्धमथवा महेश्वरम् ।
पाशसोत्पलकपालशूलिनं चिन्तयेज्जपविधौ विभूतये ।।

ध्यानान्तरम् -

अथवा षोडशशूलव्यग्रभुजा त्रिणयनाऽहिनद्धाङ्गी ।
अरुणांशुकानुलेपनवर्णाभरणा च भगवती ध्येया ।।

इदं तु क्रूरप्रयोगे ध्यानम् । क्ष्म्रयौं । इति मन्त्रः ।।

अनल - क - म - ष - म - रेफ - प्राण संघातवाम
श्रुतिहिमरुचिखण्डैर्मण्डितो मन्त्रराजः ।।

इति मन्त्रोद्धारः । रेफ क ष म पुनः रेफ य औं ऊं इत्येतेषां वर्णानां संयोगो मन्त्रः । सर्वकामफलप्रदः । मूकानां वाक्सिद्धिप्रदश्च । लक्षं जपेत् । त्रिमधुरार्द्रैस्तिलैस्तण्डुलैश्चायुतं हुनेत् । पुरश्चरणहोमः ।।

अर्धनारीश्वरचिन्तामणिमन्त्रविधानप्रसङ्गात् यक्षिणीमन्त्र लिख्यन्ते -

सर्वसां यक्षिणीनां तु ध्यानं कुर्यात्समाहितः ।
भगिनीमातृपुत्रीस्त्रीरूपतुल्यं यथेप्सितम् ।।

ओं ह्रीं रतिप्रिये स्वाहा । इत्यष्टार्णोऽयं मन्त्रः । ऋष्यादयः प्रसिद्धाः ।।

अस्य प्रयोगः -

शङ्खालिप्तपटे देवीं गौरवर्णां धृतोत्पलाम् ।
सर्वालङ्कारिणीं दिव्यां समालिख्यार्चयेत्ततः ।।

जातीपुष्पैस्सोपचारैः सहस्रैकं ततो जपेत् ।
त्रिसन्ध्यं सप्तरात्रं तु ततो रात्रौ शुचिर्जपेत् ।।

अर्धरात्रगते देवी समागत्य प्रयच्छति ।
पञ्चविंशतिदीनारान् प्रत्यहं तोषिता सती ।।

अथ कम्बलकामन्त्रः -

ओं चं वः कम्बलके गृह्ण पिण्डं पिशाचिनी(नि) स्वाहा ।

अस्य प्रयोगः -

एकविंशद्दिनं यावत् उदयास्तमयं जपेत् ।
नित्यं सायं स्वमाहारपिण्डं हर्म्योपरि क्षिपेत् ।।

त्रिसप्ताहेन सा तुष्टा शय्यां गत्वा पिशाचिनी ।
पञ्चविंशतिदीनारान् ददाति प्रतिवासरम् ।।
कर्णे कथयति क्षिप्रं यद्यत्पृच्छत्यसौ क्रमात् ।।

अथ चन्द्रासुमतिमन्त्रः -

ओं गुळु गुळु चन्द्रासुमति सुरप्रव्रजति हुळु हुळु चन्द्रे चन्द्रगिरे स्वाहा ।।

अस्य प्रयोगः -

गुहाचार (ला)न्तरेकान्ते लक्षमेकं मनुं जपेत् ।
पुष्पं धूपं चरुं पूजां नित्यं कुर्यात्प्रयत्नतः ।।

पञ्चामृतैर्दशांशेन हुते देवी प्रसीदति ।
दीनाराणां सहस्रैकं प्रत्यहं तोषिता सती ।।

(ददाति इति वाक्यशेषः)

अथ सुरसुन्दरीमन्त्रः -

ओं आगच्छागच्छ सुरसुन्दरि स्वाहा ।।

एकलिङ्गे महादेवं(वीं) त्रिसन्ध्यं पूजयेत्सदा ।
धूपं दत्वा जपेन्मन्त्री त्रिसन्ध्यं त्रिसहस्रकम् ।।

मासमेकं ततो याति यक्षिणी सुरसुन्दरी ।
दत्वाऽर्घ्यं प्रणमेन्मन्त्री स्मृतं सा तु प्रयच्छति ।।

देवी दारिद्र्यदग्धोऽस्मि तन्मे नाशकारी भव ।
ततो ददाति सा तुष्टा विनाऽऽयुश्चिरञ्जीवितम् ।।

अथ अनुरागिणीमन्त्रः -

ओं ह्रीं अनुरागिणी(णि) मैथुनप्रिये स्वाहा ।।

अस्य प्रयोगः -

कुङ्कुमेन समालिख्य भूमिदेशे सलक्षणम् ।
प्रतिपत्तिथिमारभ्य पूजां कृत्वा जपेत्ततः ।।

त्रिसन्ध्यं त्रिसहस्रं तु मासान्ते पूजयेन्निशि ।
संजपन्नर्धरात्रे तु समागत्य प्रयच्छति ।।

दीनाराणां सहस्रैकं प्रत्यहं परितोषिता । ( दीनारं - स्वर्णम् ) ।।

अथ मनोहरामन्त्रः -

ओं ह्रीं सर्वकामदे मनोहरे स्वाहा ।।

अस्य प्रयोगः -

नदीतीरे शुभे देशे चन्दनेन सुमण्डलम् ।
विधाय पूजयेद्देवीं ततो मन्त्र्य युतं जपेत् ।।

त्रिसप्ताहं जपेदेवं प्रसन्ना वितरेत्सदा ।
दीनाराणां सहस्रैकं व्ययी कुर्याद्दिने दिने ।।

विना व्ययेन सा क्रुद्धा न ददाति कदाचन ।।

अथ शङ्खचारिणी मन्त्रः -

ओं शङ्खचारिणे शङ्खाभरणे द्रां द्रीं हें श्रीं स्वाहा ।।

अस्य प्रयोगः -

मन्त्रायुतं जपेन्मन्त्री प्रातस्सूर्योदये सति ।
मासमेकं जपेदेवं पूजां कुर्यात् दिने दिने ।।

शङ्खसंलिप्तपट्टे तु शुक्लपुष्पैः सपायसैः ।
दशांशं होमयेत्साज्यैः इन्धनैः करवीरजैः ।।
ददाति शङ्खिनी तुष्टा नित्यं रूपकपञ्चकम् ।।

अथ मणिभद्रमन्त्रः -

ओं नमो मणिभद्राय नमः । पूर्णभद्राय नमो महायक्षसेनाधिपतये मोट मोट धारय स्वाहा ।। (यक्षिणीमन्त्राणां मध्ये एष एव यक्षमन्त्रः)

अस्य प्रयोगः -

साहस्रमष्टकं मन्त्रं जपेत् सप्तदिनावधि ।
प्रत्यहं मणिभद्राख्यः प्रयच्छत्येकरूपकम् ।।

रूपकं रूपे ।. (अथवा रौप्यं)

अथ स्वामीश्वरीमन्त्रः -

ओं ह्रीं आगच्छागच्छ स्वामीश्वरि स्वाहा ।।

अस्य प्रयोगः -

एकासने शुचौ देशे त्रिसन्ध्यं त्रिसहस्रकम् ।
मासमेकं जपेन्मन्त्री ततः पूजां समारभेत् ।।

पुष्पधूपादिनैवेद्यैः प्रतीपैर्घृतपूरितैः ।
रात्रावभ्यर्चयेत्सम्यक् सुस्थिरस्सुप्रसन्नधीः ।।

अर्धरात्रे गते देवी समागत्य प्रयच्छति ।
रसं रसायनं दिव्यं वस्त्रालङ्कारभूषणम् ।।

अथ वटयक्षिणीमन्त्रः -

ओं ह्रीं श्रीं वटवासिनी(नि) यक्षकुलप्रसूते वटयक्षिणी(णि) एह्येहि स्वाहा ।।

अथ प्रयोगः -

त्रिपथस्थवटाधस्थो रात्रौ मन्त्रं जपेत्सदा ।
लक्षत्रयं ततस्सिद्धा देवी स्याद्वटयक्षिणी ।।

वस्त्रालङ्करणं दिव्यं रसं सिद्धं रसायनम् ।
दिव्याञ्जनं च सा तुष्टा साधकाय प्रयच्छति ।।

अथ विशालामन्त्रः -

ओं विशालेशे द्रां द्रं क्लीं एहि एहि स्वाहा ।।

अस्य प्रयोगः -

चिञ्चावृक्षतले मन्त्रं लक्षमावर्तयेत् शुचिः ।
विशाला वितरेत्तुष्टा रसं दिव्यं रसायनम् ।।

चिञ्चावृक्षः - चिञ्चचेंजाड ।

अथ चन्द्रिकामन्त्रः -

ओं ह्रीं चन्द्रिके हंसः स्वाहा ।।

अस्य प्रयोगः -

**शुक्लपक्षे जपेत्तावद्यावत् दृश्येत चन्द्रमाः ।**
**प्रतिपत्पूर्वपूर्णान्तं तावल्लक्षमिमं जपेत् ।।**
**अमृतं चन्द्रिकादत्तं पीत्वाऽयममरो भवेत् ।।**

अथ हंसीमन्त्रः -

ओं हंस सर्वलोकलोचनानि बन्ध बन्ध देव्याज्ञापयति स्वाहा ।।

अस्य प्रयोगः -

**हृदि ध्यात्वा जपेद्रात्रौ हंससंस्थां सचेटकाम् ।**
**योगं ददाति सा तुष्टा जरामृत्युविनाशनम् ।।**

अथ विचित्रामन्त्रः -

ओं विचित्रे विचित्ररूपेण सिद्धिं कुरु कुरु स्वाहा ।।

अस्य प्रयोगः -

**लक्षमेकं जपेन्मन्त्री वटवृक्षतले शुचिः ।**
**बन्धूककुसुमैः पश्चात् मध्वाज्यक्षीरमिश्रितैः ।।**

**दशांशं योनिकुण्डे तु हुत्वा देवी प्रसीदति ।**
**विचित्रा साधकस्यैव प्रयच्छेदीप्सितं फलम् ।।**

झ्रंजुंसः । पुष्कलावर्तकाभ्यां नमः । मेघवृष्टिं कुरु कुरु ।।
(मातृकायां मूलमन्त्रमात्रं दृश्यते)

**।। इति श्रीमहाराजतुलजेन्द्रविरचिते मन्त्रशास्त्रसङ्ग्रहे पञ्चमोऽध्यायः ।।**

# APPENDIX - 1

A list of names of herbs, roots, plants, medicinal articles and flowers referred to in this book.

| *SANSKRIT* | *TAMIL* | *BOTANICAL* |
|---|---|---|
| काकमालि | மணத்தக்காளி | Solanum Nigrum Rubrum |
| निर्गुण्डी | நொச்சில் | Vitere negundo |
| काश्मर्यम् | பெருங்குமிழ் | Grnelina asiatica |
| वृषा, वासकः | ஆடாதொடை | Adhatoda vasica |
| मृद्वीकम् | முந்திரிகைப்பழம் | Vitisvimi Fera |
| अमृता गुधालता, छिन्ना, गुळवेल | சீந்தில், சீந்தில்கொடி | Tinospo recordi focia |
| मधूकम् | இலுப்பைப்பூ | Madhuca Indica |
| उत्पलम् | நீலோத்பலம் | Nymphaca stellata |
| उडुतरुशकलम्, अङ्कोलम् | அழிஞ்சில் | Alangium Decapetalum |
| शतवीर्या, दूर्वा | அறுகம்புல் | Cynodon Dactylon |
| शिरीषम् | வாகைப்பூ | Acacia Speciosa |
| रामठं, हिङ्गुः | பெருங்காயம் | Ferula Asafoetida |
| राजी, राजिका आसुरी, मोहर्या | கடுகு | Nigrae Semina |
| तीक्ष्णतैलम् | கடுகு எண்ணெய் | Mustard oil (English) |
| कारस्करम्, विषमुष्टिका | எட்டி | Strychnos Nuxvomica |
| सारम्, असनम् | வேங்கை | Pertrocarpus Marsuplum |
| विषतरुसुमनः | எட்டிப்பூ | - |
| आनित्यं, यूथकपूर्णी | அநிச்சம் | Rhinacanthus |
| पलाशम् | புரசு | Butea Frondosa |

| | | |
|---|---|---|
| मयूरकम्, अपामार्गम् | நாயுருவி | Achyranthesaspera |
| पिप्पलम्, अश्वत्थम् | அரசு | Ficns Religiosa |
| शमी | வன்னி | Prosopis spkigera |
| कुरण्डम् | செங்குறிஞ்சில் | - |
| पारदः , रसः | பாதரஸம் | Mercury |
| अजमोदकः | அஜமதம் | Carhmpox Burghlanum |
| टङ्कम् | வெண்காரம் | Boraks |
| सैन्धवम् | உப்பு (இந்துப்பு) | Rack Salt |
| वज्रवल्ली | பெரண்டை | - |
| सहा | எழுத்தாணிப் பூண்டு | Pren Anthes Sarmentosa |
| देवी, कल्हारम् | செங்கழுநீர் | Ponte Derla Vaginalls |
| मधुपम् | கறுஞ்சாரங்கண்ணி | - |
| मुसली | நிலப்பனை | Curculigo orchloldes |
| विष्णुदयिता, विष्णुक्रान्ता | விஷ்ணுக்ராந்தி | Evolvulus Alsinoldes |
| सदाभद्रा, पाषाणभेदि | சிறுசன்னை. சிறுபீணை | Chlrupeelal Aerualanata |
| शतमखलता, इन्द्रवल्ली | முடக்கத்தான் | Cardiosper mumhallcacalum |
| अञ्जलिकरी | ஆனைவணங்கி | - |
| व्याघातं, चतुरङ्गुलम् | கொன்னை, கொன்றை | Cassla Fistula |
| प्लक्षः | இச்சில் | Tlnopora cordifocia |
| रोहिणम्, न्याग्रोघः वटः | ஆலமரம் | Ficus Bengalensis |
| खादिरम्, खैर | கருங்காலி | - |
| श्रीवृक्षः | பில்வம் | - |
| प्रियङ्गुः, फलिनी | ஞாழல்பூ | - |
| मरीचम् | மிளகு | - |
| सूरणम्, श्येनग् | கருணைக்கிழங்கு | - |

| | | |
|---|---|---|
| वन्हि | கொடிவேலி | - |
| करवीरम्, कन्नेरी अश्वारि | அரளி | Mervmodo Rumsolanid |
| केरवम्, कुमुदम् | ஆம்பலம் | - |
| नागपुष्पम्, केसरम् | நாகப்பூ | Mesua Ferrea |
| जाति | சாதிமுல்லை, சாதிமல்லி | - |
| पारन्ती | வெழுச்சி | - |
| वकुळम्, घोलसरीचि | மகிழம்பூ | Mimusops elengi |
| जाति | சிறுசெண்பகம் | - |
| लक्ष्मीः | ஸ்ரீதாளி | - |
| बन्धूकम्, दासुंदपुष्पं | உச்சச்சிலந்தன் | - |
| किंशुकम् | முருக்கு, புரசம்பூ | - |
| वञ्जुळम्, वेतसम् | நீர்வஞ்சி | - |
| कनक | பொன்னுமத்தை | - |
| कोद्रवम् | வரகு | - |
| लज्जा | வரள்சுண்டி | - |
| द्राक्षा | திராட்சை | Vitis vinifera |
| निर्यासम् | பிசின் | Resin |
| विट् | பஸ்ம | - |
| मृगमदम् | புனுகு | - |
| कस्तूरी | கஸ்தூரி | Musk |
| काश्मीरम् | குங்குமப்பூ | Saffron |
| रोचनम् | கோரோசனை | - |
| ,अलक्तकम् | செம்பஞ்சு | - |
| दीपिक | புத்ரதீபிகை | - |
| सिता | சர்க்கரை | Sugar |

# APPENDIX - 2

## ।। यन्त्रे दिक्कल्पनम् ।।




**अत्रेदमनुसन्धेयम् -**

यद्यपि यन्त्रपूजायां दिक्पालकपूजनविषयेऽपि "पूज्यपूजकयोर्मध्यं पूर्वमित्यभिधीयते । प्रादक्षिण्येन विज्ञेया प्राच्याग्नेय्यादि कल्पना" इति शास्त्रवचनमस्ति तथापि कात्यायनीतन्त्रे - मुम्बयी निर्णयसागर मुद्रितग्रन्थे २७ पृष्ठे-मतान्तरमेवम्-"अत्र सर्वत्र पूज्यपूजकयोर्मध्यं प्राचीदिक्परिकीर्तिता" इति वचनमनुसृत्य प्रागादि दिशो ग्राह्याः । इन्द्रादि- दिक्पालतदायुधपूजाविषये तु सूर्योदयादिकैवेति ज्ञेयमिति । तत्र प्रकाशिते चण्डीयन्त्रेऽपि इदं प्रकाशितम् । मन्त्रमहोदधावपि २२ तमे तरङ्गे ३१-३२ तमःश्लोकः - "धर्मादिपूजने प्राची तथैवावरणार्चने । पूजकस्य पुरः कल्प्या - शक्रादिषु यथास्वकम् इति । अत्र शक्रादिषु तु प्रसिद्धैव प्राची इति टिप्पणी इति ।।

# எமது வெளியீடுகள்

| | |
|---|---|
| தலவரலாற்று ஆய்வுக்கட்டுரைகள் | 180-00 |
| தமிழ் எண்ணும் எழுத்தும் | 90-00 |
| தமிழறி மடந்தை கதை | 80-00 |
| தமிழ் ஆய்வுக் கட்டுரைகள் | 100-00 |
| சரபேந்திர பூபால குறவஞ்சி | 100-00 |
| அழகரந்தாதி | 100-00 |
| இராஜ மோகன குறவஞ்சி | 130-00 |
| விரத கதா சங்கிரஹா | 110-00 |
| மூன்று சோதிட நூல்கள் | 150-00 |
| திருப்புகலூர் அந்தாதி | 180-00 |
| பஞ்சதந்திர செய்யுள் | 220-00 |
| அருணகிரி அந்தாதி | 90-00 |
| நீதிவெண்பா | 120-00 |
| திருநெறி விளக்கம் | 120-00 |
| நிலத்தடி நீர் காணுதல் | 100-00 |
| தமிழகக் கோயிற்கலைமரபு | 120-00 |
| மலை அருவி | 330-00 |
| கர்ப்பிணீரக்ஷை | 40-00 |
| சித்த மருத்துவச் சுடர் | 400-00 |
| தேரர் சிறுநீர்குறி சோதனை | 65-00 |
| அக்கால சித்த வைத்திய அனுபவ முறைகள் | 130-00 |
| குழந்தை பராமாரிப்பு | 70-00 |
| நட்சத்திர சிந்தாமணி பாகம் - II | 200-00 |
| அனுபவ வைத்திய திரட்டு | 150-00 |
| வாஸ்து வித்யை | 150-00 |

## OUR OTHER PUBLICATIONS

| | | |
|---|---|---|
| Arunagiri Antadi | Tamil | 90-00 |
| Dadheesi Puranam | Tamil | 70-00 |
| Sita Kalyanam | Sanskrit & Tamil | 35-00 |
| Gayatri Kosam | Sanskrit & Tamil | 90-00 |
| Ragaratnakaram | Sanskrit & Tamil | 15-00 |
| Dhanyakumaracharitram (Dharmaneri Kathai) | Sanskrit & Tamil | 44-00 |
| Kandukapura Mahatmyam | Sanskrit & Tamil | 25-00 |
| Ramachinthamani Aaruudam (Nandinagari Catalogue) | Sanskrit & Tamil | 25-00 |
| Vruttaratnavali (Chandas Sastram) | Sanskrit & Tamil | 30-00 |
| Kalanandakam | Sanskrit & Tamil | 55-00 |
| Prabodha Chandrika (Grammer) | Sanskrit & Tamil | 70-00 |
| Sirungarakosam | Sanskrit | 12-00 |
| Vedasara Siva Sahasram | Sanskrit | 80-00 |
| Stotra Ramayanam | Sanskrit | 25-00 |
| Mukunda Vilasam | Sanskrit | 35-00 |
| Vinatananda Vyayoga | Sanskrit | 40-00 |
| Lokaswarupam | Tamil | 75-00 |
| ThiruvappanurPuranam | Tamil | 50-00 |
| Jatakachandrika | Tamil | 70-00 |
| Marathi Lavani Songs | Marathi | 35-00 |
| Nakshatra Chinthamani (Part - I) | Tamil | 310-00 |
| Nakshatra Chinthamani (Part - II) | Tamil | 200-00 |
| Nakshatra Chinthamani (Part - III) | Tamil | 250-00 |



# AN APPEAL

Manuscripts on Palmleaf or Paper of the ancient works of the wise men of the past, are the great treasures, solely inherited by the Nation and it is the moral obligation of persons who possess them to preserve them safely for the future generations of mankind.

Probably you have some of these in your possession or you know friends or neighbours who possess them. You can make a great contribution to the cause of the preservation not only of our National Culture but also to the Culture of Humanity as a whole by arranging to present such manuscripts to the famous T. M. S. S. M. Library, Thanjavur.

The Manuscripts so presented will be accepted and acknowledged with pleasure and gratitude by the authorities of the Library, preserved with meticulous care and made available to successive generations of readers and scholars for study and research. The hitherto unpublished works found among them, will be printed and published in due course, as facilities occur, with the expression of the Library's gratitude for your gift.

The great Scholar King of Tanjore, **Rajah Serfoji,** has attained immortal fame by dedicating enormous time and wealth to the expansion and firm establishment of this world famous **"Sarasvati Mahal Library".** It is open to you to share the honour of Serfoji, in your own measure by contributing your manuscripts to the great institution built by him.

This great Honour is beckoning to you to accept it. Will you hasten to take it up? The Library waits for your answer.

**DISTRICT COLLECTOR AND DIRECTOR**
**Sarasvati Mahal Library,**
**Thanjavur.**

